## भुवनज्ञानं सूर्ये संयमात् ॥ २५ ॥

तीप्रवृत्तिरुक्ता मनसस्तस्यां य आलोकस्तं योगी सूक्ष्मे वा व्यवहिते वा विप्रकृष्टे वार्थे विन्यस्य तमर्थमधिगच्छति ॥ २४ ॥

भुवनज्ञानं सूर्ये संयमात् । तत्प्रस्तारः सप्तलोकास्तत्रावीचेः प्रभृति मेरुपृष्ठं यावदित्येवं भूर्लोकः । मेरुपृष्ठादारभ्य आध्रुवाद्ग्रहनक्षत्रताराविचित्रोऽन्तरिक्षलोकः । ततः परः स्वर्लोकः पञ्चविधो माहेन्द्रस्तृतीयो लोकः । चतुर्थः प्राजापत्यो महर्लोकस्त्रिविधो ब्राह्मः । तद्यथा जनलोकस्तपोलोकः सत्यलोक इति । ब्राह्मस्त्रिभूमिको लोकः प्राजापत्यस्ततो महान् । माहेन्द्रश्च स्वरित्युक्तो दिवि तारा भुवि प्रजा इति संग्रहश्लोकः । तत्रावीचेरुपर्युपरि निविष्टाः षण्महानरकभूमयो घनसलिलानलानिलाकाशतमःप्रतिष्ठा महाकालाम्बरीषरौरवमहारौरवकालसूत्रान्धतामिस्राः । यत्र स्वकर्मोपार्जितदुःखवेदनाः प्राणिनः कष्टमायुर्दीर्घकालमाक्षिप्य जायन्ते । ततो महातलरसातलातलसुतलवितलतलातलपातालाख्यानि सप्तपातालानि । भूमिरियमष्टमी सप्तद्वीपा वसुमती यस्याः सुमेरुर्मध्ये पर्वतराजः काञ्चनस्तस्य राजतवैदूर्यस्फटिकहेममणिमयानि शृङ्गाणि । तत्र वैदूर्यप्रभानुरागान्नीलोत्पलपत्रश्यामो नभसो दक्षिणभागः श्वेतः पूर्वः स्वच्छः पश्चिमः कुरण्टकाभ उत्तरो दक्षिणपार्श्वे चास्य जम्बूर्यतोऽयं जम्बूद्वीपस्तस्य सूर्यप्रचाराद्रात्रिंदिवं लग्नमिव वर्तते । तस्य नीलश्वेतशृङ्गवन्त उदीचीनास्त्रयः पर्वता

---

यार्थे संयमेन विन्यस्य तमधिगच्छेदिति ॥ २४ ॥

भुवनज्ञानं सूर्ये संयमात् । आध्रुवादितो मेरुपृष्ठात्तदेयमनेन संग्रहश्लोकान्तेन संक्षेपतः, सप्तलोकानुपन्यस्य विस्तरेणाह । तत्रावीचेरिति । घनशब्देन पृथिव्युच्यते । भूमिः स्थानमित्यर्थः । एते महानरका अनेकोपनरकपरिवारा बोद्धव्याः । एतानेव नामान्तरेणोपसंहरति । महेति । तस्य सूर्यप्रचाराद्रात्रिंदिव लग्नमिव वर्तते । यमेवास्य भागं सूर्यस्त्यजति तत्र रात्रिः । यमेव भाग-

द्विसाहस्रायामास्तदन्तरेषु त्रीणि वर्षाणि नवनवयोजनसाहस्राणि रमणकं हिरण्मयमुत्तराः कुरव इति । निषधहेमकूटहेमशैला दक्षिणतो द्विसाहस्रायामास्तदन्तरेषु त्रीणि वर्षाणि नवनवयोजनसाहस्राणि हरिवर्षं किंपुरुषं भारतमिति । सुमेरोः प्राचीना भद्राश्वमाल्यवत्सीमानः प्रतीचीनाः केतुमालगन्धमादनसीमानः । मध्ये वर्षमिलावृतम् । तदेतद्योजनशतसाहस्रं सुमेरोर्दिशि दिशि तदर्धेन व्यूढम् । स खल्वयं शतसाहस्रायामो जम्बूद्वीपस्ततो द्विगुणेन लवणोदधिना वलयाकृतिना वेष्टितः । ततश्च द्विगुणा द्विगुणाः शाककुशक्रौञ्चशाल्मलगोमेधपुष्करद्वीपाः सप्त समुद्राश्च सर्षपराशिकल्पाः सविचित्रशैलावतंसा इक्षुरससुरासर्पिर्दधिमण्डक्षीरस्वादूदकसप्तसमुद्रपरिवेष्टिता वलयाकृतयो लोकालोकपर्वतपरिवाराः पञ्चाशद्योजनकोटिपरिसङ्ख्याताः । तदेतत्सर्वं सुप्रतिष्ठितसंस्थानमण्डमध्ये व्यूढम् । अण्डं च प्रधानस्याणुरवयवो यथाकाशे खद्योत इति । तत्र पाताले जलधौ पर्वतेष्वेतेषु देवनिकाया असुरगन्धर्वकिंनरकिंपुरुषयक्षराक्षसभूतप्रेतपिशाचापस्मारकाप्सरोब्रह्मराक्षसकूष्माण्डविनायकाः प्रतिवसन्ति । सर्वेषु द्वीपेषु पुण्यात्मानो देवमनुष्याः । सुमेरुस्त्रिदशानामुद्यानभूमिः । तत्र मिश्रवनं नन्दनं चैत्ररथं सुमानस-

---

मलङ्करोति तत्र दिनमिति । सकलजम्बूद्वीपपरिमाणमाह । तदेतद्योजनशतसाहस्रम् । किंभूत योजनानां शतसाहस्रमित्याह । सुमेरोर्दिशि दिशि तदर्धेन पञ्चाशद्योजनसाहस्रेण व्यूढं सङ्क्षिप्तम् । यतोऽस्य मध्यस्थः सुमेरुः समुद्राश्च सर्षपराशिकल्पा इति द्विगुणा द्विगुणा इतिसंबन्धः । यथा सर्षपराशिर्न नीहाराशिरिवोच्छ्रितो नापि भूमिसमस्तथा समुद्रा अपीत्यर्थः । विचित्रैः शैलैरवतंसैरिव सह वर्तन्त इति सविचित्रशैलावतंसा द्वीपास्तदेतत्सर्वं सप्तद्वीपविपिननगनगरनीरधिमालावलय लोकालोकपरिवृतं विश्वम्भरामण्डलं ब्रह्माण्डमध्ये व्यूढं संक्षिप्तं सुप्रतिष्ठितं संस्थानं सन्निवेशो यस्य तद्यथोक्तम् । ये तत्र परिवसन्ति तान्दर्शयति । तत्र पाताल इति । सुमेरोः सन्निवेशमाह । सुमेरुरिति ।

मित्युद्यानानि । सुधर्मा देवसभा । सुदर्शनं पुरम् । वैजयन्तः प्रासादः । ग्रहनक्षत्रतारकास्तु ध्रुवे निबद्धाः । वायुविक्षेपनियमेनोपलक्षितप्रचाराः । सुमेरोरुपर्युपरि सन्निविष्टा दिवि विपरिवर्तन्ते । माहेन्द्रनिवासिनः षडेव देवनिकायाः । त्रिदशा अग्निष्वात्तायामास्तुषिता अपरिनिर्मितवशवर्तिनः परिनिर्मितवशवर्तिनश्चेति । ते सर्वे सङ्कल्पसिद्धाः । अणिमाद्यैश्वर्योपपन्नाः कल्पायुषो वृन्दारकाः कामभोगिन औपपादिकदेहा उत्तमानुकूलाभिरप्सरोभिः कृतपरिचारा महति लोके प्राजापत्ये पञ्चविधो देवनिकायाः । कुमुदा ऋभवः प्रतर्दना अञ्जनाभाः प्रचिताभा इत्येते महाभूतवशिनो ध्यानाहाराः कल्पसहस्रायुषः । प्रथमे ब्रह्मणो जनलोके चतुर्विधो देवनिकायो ब्रह्मपुरोहिता ब्रह्मकायिका ब्रह्ममहाकायिका अजरा अमरा इति । ते भूतेन्द्रियवशिनो द्विगुणा द्विगुणोत्तरायुषः । द्वितीये तपसि लोके त्रिविधो देवनिकायः । आभास्वरा महाभास्वराः सत्यमहाभास्वरा इति । ते भूतेन्द्रियप्रकृतिवशिनो

---

तदेवं भूर्लोकं सप्रकारमुक्त्वा सप्रकारमेवान्तरिक्षलोकमाह । ग्रहेति । विक्षेपो
व्यापारः । स्वर्लोकमादर्शयति । माहेन्द्रनिवासिन इति । देवनिकाया देव-
जातयः । षण्णामपि देवनिकायानां रूपोत्कर्षमाह । सर्वे सङ्कल्पसिद्धा
इति । सङ्कल्पमात्रादेवैषां विषया उपनमन्ति । वृन्दारकाः पूज्याः । कामभो-
गिनो मैथुनप्रियाः । औपपादिकदेहाः पित्रोः संयोगमन्तरेणाकस्मादेव दिव्यं
शरीरमेषां धर्मविशेषोपात्तसंस्कृतेभ्योऽणुभ्यो भूतेभ्यो भवतीति । महर्लोकमाह ।
महतीति । महाभूतवशिनः । यद्यदेतेभ्यो रोचते तत्तदेव महाभूतानि प्रय-
च्छन्ति । तदिच्छातश्च महाभूतानि तेन तेन संस्थानेनावतिष्ठन्ते । ध्यानाहारा
ध्यानमात्रतृप्ताः पुष्टा भवन्ति । जनलोकमाह प्रथम इत्युत्क्रमेण । भूतेन्द्रिय-
वशिन इति । भूतानि पृथिव्यादीनीन्द्रियाणि श्रोत्रादीनि यथा नियोक्तुमिच्छन्ति
तथैव नियुज्यन्ते । उत्क्रमापेक्षया द्वितीयं ब्रह्मणस्तपोलोकमाह । द्वितीय
इति । भूतेन्द्रियप्रकृतिवशिन इति । प्रकृतिः पञ्चतन्मात्राणि तद्वशिनस्तदि-
च्छातो हि तन्मात्राण्येव कार्याकारेण परिणमन्त इत्यागमिनः । द्विगुणेत्याभा-

द्विगुणद्विगुणोत्तरायुपः सर्वे ध्यानाहारा कल्पसहस्रायुप ऊर्ध्वरेतस ऊर्ध्वमप्रतिहतज्ञाना अधरभूमिष्वनावृतज्ञानविषयाः। तृतीये ब्रह्मणः सत्यलोके चत्वारो देवनिकाया अच्युताः शुद्धनिवासाः सत्याभाः संज्ञासंज्ञिनश्चेति। अकृतभवनन्यासाः स्वप्रतिष्ठा उपर्युपरिस्थिताः प्रधानवशिनो यावत्सर्गायुपः। तत्राच्युताः सवितर्कध्यानसुखाः शुद्धनिवासाः सविचारध्यानसुखाः सत्याभा आनन्दमात्रध्यानसुखाः संज्ञासंज्ञिनश्चास्मितामात्रध्यानसुखास्तेऽपि त्रैलोक्यमध्ये प्रतिष्ठन्ते। त एते सप्तलोकाः सर्वे सब्रह्मकाः। विदेहप्रकृतिलयास्तु मोक्षपदे वर्तन्त इति न लोकमध्ये न्यस्ता इत्येतद्योगिना साक्षात्करणीयम्। सूर्यद्वारे संयमं कृत्वा ततोऽ-

---

स्वरेभ्यो द्विगुणायुपो महाभास्वरास्तेभ्योऽपि द्विगुणायुपः सत्यमहाभास्वरा इत्यर्थः। ऊर्ध्वमित्यूर्ध्वे सत्यलोकेऽप्रतिहतज्ञाना आवीचेस्तु प्रभृत्या तपोलोकं सूक्ष्मं व्यवहितादि सर्वं विजानन्तीत्यर्थः। तृतीयं ब्रह्मणः सत्यलोकमाह। तृतीय इति। अकृतो भवनस्य गृहस्य न्यासो यैस्ते तथोक्ताः। आधाराभावादेव स्वप्रतिष्ठाः। स्वेषु शरीरेषु प्रतिष्ठा येषां वे तथोक्ताः। प्रधानवशिनस्तदिच्छातः सत्त्वरजस्तमांसि प्रवर्तन्ते यावत्सर्गायुपः। तथाच श्रूयते। ब्रह्मणा सह ते सर्वे सम्प्राते प्रतिसंचरे। परस्यान्ते कृतात्मानः प्रविशन्ति परं पदमिति। तदेवं चतुर्णां देवनिकायानां साधारणधर्मानुक्त्वा नामविशेषग्रहणेन धर्मविशेषानाह। तत्रेति। अच्युता नाम देवाः स्थूलविषयध्यानसुखास्तेन ते तृप्यन्ति। शुद्धनिवासा नाम देवाः सूक्ष्मविषयध्यानसुखास्तेन ते तृप्यन्ति। सत्याभा नाम देवा इन्द्रियविषयध्यानसुखास्तेन ते तृप्यन्ति। संज्ञसंज्ञिनो नाम देवा अस्मितामात्रध्यानसुखास्तेन ते तृप्यन्ति। तत्र एते सर्वे सम्प्रज्ञातसमाधिमुपासते। अथासम्प्रज्ञातसमाधिनिष्ठा विदेहप्रकृतिलयाः कस्माच्च लोकमध्ये न्यस्यन्त इत्यत आह। विदेहप्रकृतिलयास्त्विति। बुद्धिवृत्तिमन्तो हि दर्शितविषया लोकयात्रां वहन्तो लोकेषु वर्तन्ते। नचैवं विदेहप्रकृतिलयाः सत्यपि साधिकारत्व इत्यर्थः। तदेतदासत्यलोकमाचावीचेर्योगिना साक्षात्करणीयं सूर्यद्वारेषु सुषुम्नायां नाड्याम्। नचैतावतापि तत्साक्षात्कारो भवतीत्यत

**चन्द्रे ताराव्यूहज्ञानम् ॥ २६ ॥**

**ध्रुवे तद्गतिज्ञानम् ॥ २७ ॥**

**नाभिचक्रे कायव्यूहज्ञानम् ॥ २८ ॥**

**कण्ठकूपे क्षुत्पिपासानिवृत्तिः ॥ २९ ॥**

**कूर्मनाड्यां स्थैर्यम् ॥ ३० ॥**

न्यत्रापि । एवं तावदभ्यसेद्यावदिदं सर्वं दृष्टमिति ॥ २५ ॥

चन्द्रे ताराव्यूहज्ञानम् । चन्द्रे संयमं कृत्वा ताराणां व्यूहं विजानीयात् ॥ २६ ॥

ध्रुवे तद्गतिज्ञानम् । ततो ध्रुवे संयमं कृत्वा ताराणां गतिं विजानीयात् । ऊर्ध्वविमानेषु संयमं कृत्वा तानि विजानीयात् ॥ २७ ॥

नाभिचक्रे कायव्यूहज्ञानम् । नाभिचक्रे संयमं कृत्वा कायव्यूहं विजानीयात् । वातपित्तश्लेष्माणस्त्रयो दोषाः । धातवः सप्त त्वग्लोहितमांसस्नाय्वस्थिमज्जाशुक्राणि । पूर्वं पूर्वमेषां बाह्यमित्येष विन्यासः ॥ २८ ॥

कण्ठकूपे क्षुत्पिपासानिवृत्तिः । जिह्वाया अधस्तात्तन्तुस्ततोऽधस्तात्कण्ठस्ततोऽधस्तात्कूपस्तत्र संयमात्क्षुत्पिपासे न बाधेते ॥ २९ ॥

कूर्मनाड्यां स्थैर्यम् । कूपादध उरसि कूर्माकारा नाडी तस्यां

---

आह । एवं तावदन्यत्रापि सुषुम्नाया अन्यत्रापि योगोपाध्यायोपदिष्टेषु यावदिदं सर्वं जगद्दृष्टमिति । बुद्धिसत्त्वं हि स्वभावत एव निश्वप्रकाशनसमर्थं तमोमलावृतं यत्रैव रजसोद्घाट्यते तदेव प्रकाशयति सूर्यद्वारसंयमोद्घाटितं तु भुवनं प्रकाशयति । नचैवमन्यत्रापि प्रसङ्गस्तत्संयमस्य तावन्मात्रोद्घाटनसामर्थ्यादिति सर्वमवदातम् ॥ २५ ॥

चन्द्रे ताराव्यूहज्ञानम् । ध्रुवे तद्गतिज्ञानम् । नाभिचक्रे कायव्यूहज्ञानम् । कण्ठकूपे क्षुत्पिपासानिवृत्तिः । कूर्मनाड्यां स्थैर्यम् । तत्र तत्र जिज्ञासायां योगिनस्तत्र तत्र संयमः । एवं क्षुत्पिपासानिवृत्तिहेतुः संयमः स्थैर्यहेतुश्च सनत्कु-

**मूर्धज्योतिषि सिद्धदर्शनम् ॥ ३१ ॥**

**प्रातिभाद्वा सर्वम् ॥ ३२ ॥**

**हृदये चित्तसंवित् ॥ ३३ ॥**

**सत्त्वपुरुषयोरत्यन्तासङ्कीर्णयोः प्रत्ययाविशेषो भोगः परार्थत्वात्स्वार्थसंयमात्पुरुषज्ञानम् ॥ ३४ ॥**

कृतसंयमः स्थिरपदं लभते । यथा सर्पो गोधा चेति ॥ ३० ॥

मूर्धज्योतिषि सिद्धदर्शनम् । शिरःकपालेऽन्तश्छिद्रं प्रभास्वरं ज्योतिस्तत्र संयमं कृत्वा सिद्धानां द्यावापृथिव्योरन्तरालचारिणां दर्शनम् ॥ ३१ ॥

प्रातिभाद्वा सर्वम् । प्रातिभं नाम तारकं तद्विवेकजस्य ज्ञानस्य पूर्वरूपम् । यथोदये प्रभा भास्करस्य तेन वा सर्वमेव जानाति योगी प्रातिभस्य ज्ञानस्योत्पत्ताविति ॥ ३२ ॥

हृदये चित्तसंवित् । यदिदमस्मिन्ब्रह्मपुरे दहरं पुण्डरीकं वेश्म तत्र विज्ञानं तस्मिन्संयमाच्चित्तसंवित् ॥ ३३ ॥

सत्त्वपुरुषयोरत्यन्तासङ्कीर्णयोः प्रत्ययाविशेषो भोगः परार्थ-

---

रुपदिष्टो भाष्येण च निगदव्याख्यातेन व्याख्यात इति न व्याख्यातः ॥ २६ ॥ ॥ २७ ॥ २८ ॥ २९ ॥ ३० ॥

मूर्धज्योतिषि सिद्धदर्शनम् । मूर्धशब्देन सुषुम्ना नाडी लक्ष्यते । तत्र संयम इति ॥ ३१ ॥

प्रातिभाद्वा सर्वम् । प्रतिभा ऊहस्तद्भवं प्रातिभम् । प्रसङ्ख्यानहेतुसंयमवतो हि तत्प्रकर्षे प्रसङ्ख्यानोदयात्पूर्वलिङ्गं यदूहनं ज्ञानं तेन सर्वं विजानाति योगी तच्च प्रसङ्ख्यानप्रणिधापनेन संसाराच्चारयतीतितारकम् ॥ ३२ ॥

हृदये चित्तसंवित् । हृदयपदं व्याचष्टे । यदिदमस्मिन्ब्रह्मपुरे बृहत्त्वादात्मा ब्रह्म तस्य पुरं निलयस्तद्धि तत्र विजानाति स्वामिति । दहरं गर्तं तदेव पुण्डरीकमधोमुखं वेश्म । मनसः चित्तसंवेदनत्वे हेतुमाह । तत्र विज्ञानं तत्र संयमाच्चित्तं विजानाति स्ववृत्तिविशिष्टम् ॥ ३३ ॥

सत्त्वपुरुषयोरत्यन्तासङ्कीर्णयोः प्रत्ययाविशेषो भोगः परार्थत्वात्स्वार्थसंयमा-

त्वात्स्वार्थसंयमात्पुरुषज्ञानम् । बुद्धिसत्त्वं प्रख्याशीलम् । समानसत्त्वोपनिबन्धने रजस्तमसी वशीकृत्य सत्त्वपुरुषान्यताप्रत्ययेन परिणतम् । तस्माच्च सत्त्वात्परिणामिनोऽत्यन्तविधर्मा विशुद्धोऽन्यश्चितिमात्ररूपः पुरुषस्तयोरत्यन्तासङ्कीर्णयोः प्रत्ययाविशेषो भोगः । पुरुषस्य दर्शितविषयत्वात् । स भोगप्रत्ययः सत्त्वस्य परार्थत्वाद्दृश्यः । यस्तु तस्माद्विशिष्टश्चितिमात्ररूपोऽन्यः पौरुषेयः प्रत्ययस्तत्र संयमात्पुरुषविषया प्रज्ञा जायते । नच पुरुषप्रत्ययेन

त्पुरुषज्ञानम् । यत्र सत्त्वप्रकाशरूपस्यातिस्वच्छस्य नितान्ताभिभूतरजस्तमस्तया विवेकख्यातिरूपेण परिणतस्य बुद्धिसत्त्वस्यात्यन्तिकश्चैतन्यादसङ्करस्तत्र कैव कथा रजस्तमसोर्जडस्वभावयोरित्याशयवान्सूत्रकारः सत्त्वपुरुषयोरित्युवाच । इममेवाभिप्रायं गृहीत्वा भाष्यकारोऽप्याह बुद्धिसत्त्वं प्रख्याशीलमिति । न प्रख्याशीलमात्रमपितु विवेकख्यातिरूपेण परिणतमतो नितान्तशुद्धप्रकाशतयात्यन्तसारूप्यं चैतन्येनेति सङ्कर इत्यत आह । समानेति । सत्त्वेनोपनिबन्धनमविनाभावः संबन्धः समानं सत्त्वोपनिबन्धनं ययोः रजस्तमसोस्ते तथोक्ते । वशीकारोऽभिभवः । असङ्करमाह । तस्माच्चेति । चकारोऽप्यर्थः । न केवल रजस्तमोभ्यामित्यर्थः । परिणामिन इति वैधर्म्यमपरिणामिनः पुरुषादुक्तमत्यन्तविशेषः । शान्तघोरमूढरूपाया बुद्धेश्चैतन्यबिम्बोद्ग्राहेण चैतन्यस्य शान्तघोराकाराध्यारोपश्चन्द्रमस इव स्वच्छसलिलप्रतिबिम्बितस्य तत्कम्पात्कम्पनारोपः । भोगहेतुमाह । दर्शितविषयत्वादिति । असकृद्व्याख्यातम् । ननु बुद्धिसत्त्वमस्तु पुरुषभिन्नं भोगस्तु पुंसः कुतो भिद्यत इत्यत आह । स भोगप्रत्ययो भोगरूपः प्रत्ययः सत्त्वस्यातः परार्थत्वाद्दृश्यो भोग्यः । सत्त्व हि परार्थं संहतत्वात्तद्धर्मश्च भोग इति । सोऽपि परार्थः । यस्मै च परस्मै असौ तस्य भोक्तुर्भोग्यः । अथवानुकूलप्रतिकूलवेदनीयस्तु सुखदुःखानुभवो भोगः । नचायमात्मानमेवानुकूलयति प्रतिकूलयति वा । स्वात्मनि वृत्तिविरोधादतोऽनुकूलनीयप्रतिकूलनीयार्थो भोगः । भोक्ता आत्मा तस्य दृश्यो भोग्य इति । यस्तु तस्मात्परार्थाद्विशिष्ट इति । परार्थत्वादितिपञ्चम्यन्यपदाध्याहारेण व्याख्याता । स्यादेतत्पुरुषविषया चेत्प्रज्ञा हन्त भोः पुरुषः प्रज्ञायाः प्रज्ञेय इतिप्रज्ञान्तरमेव तत्रतत्रेत्यनवस्थापात इत्यत आह । नच पुरुषप्रत्ययेनेति । अयमभिसन्धिः । चित्या जडः प्रकाश्यते । न जडेन चितिः । पुरुषप्रत्ययस्तु चिदात्मा स्वप्रकाश एव चिदात्मानं प्रकाशयेत् ।

**ततः प्रातिभश्रावणवेदनादर्शास्वादवार्ता जायन्ते ॥ ३५ ॥**

**ते समाधावुपसर्गा व्युत्थाने सिद्धयः ॥ ३६ ॥**

बुद्धिसत्त्वात्मना पुरुषो दृश्यते । पुरुष एव तं प्रत्ययं स्वात्मावलम्बनं पश्यति । तथा ह्युक्तम् । विज्ञातारमरे केन विजानीयादिति ॥ ३४ ॥

ततः प्रातिभश्रावणवेदनादर्शास्वादवार्ता जायन्ते । प्रातिभात्सूक्ष्मव्यवहितविप्रकृष्टातीतानागतज्ञानम् । श्रावणाद्दिव्यशब्दश्रवणम् । वेदनाद्दिव्यस्पर्शाधिगमः । आदर्शाद्दिव्यरूपसंवित् । आस्वादाद्दिव्यरससंवित् । वार्तातो दिव्यगन्धविज्ञानमित्येतानि नित्यं जायन्ते ॥ ३५ ॥

ते समाधावुपसर्गा व्युत्थाने सिद्धयः । ते प्रातिभादयः समा-

---

चिदात्मा परपराधीनप्रकाशो जडं प्रकाशयतीतियुक्तम् । बुद्धिसत्त्वात्मनेत्यचिद्रूपतादात्म्येन जडत्वमाह । बुद्धिसत्त्वगतपुरुषप्रतिबिम्बालम्बनात्पुरुषालम्बनं दर्पणचन्द्रालम्बनं न तु पुरुषप्रकाशनात् । पुरुषालम्बनं बुद्धिसत्त्वमेव तु तेन प्रत्ययेन सङ्क्रान्तपुरुषप्रतिबिम्बं पुरुषच्छायापन्नं चैतन्यमालम्बत इतिपुरुषार्थः । अत्रैव श्रुतिमुदाहरति । तथा ह्युक्तमीश्वरेण विज्ञातारमिति । न केनचिदित्यर्थः ॥ ३४ ॥

स च स्वार्थसंयमो न यावत्प्रधानं स्वकार्यं पुरुषज्ञानमभिनिर्वर्तयति तावत्तस्य पुरस्ताद्या विभूतीराधत्ते ताः सर्वा दर्शयति । ततः प्रातिभश्रावणवेदनादर्शास्वादवार्ता जायन्ते । तदनेन योगजधर्मानुगृहीतानां मनःश्रोत्रत्वक्चक्षुर्जिह्वाघ्राणानां यथासङ्ख्यं प्रातिभज्ञानदिव्यशब्दाद्यपरोक्षहेतुभावा उक्ताः । श्रोत्रादीनां पञ्चानां दिव्यशब्दाद्युपलम्भकानां तान्त्रिक्यः संज्ञाः श्रावणाद्याः । सुगमं भाष्यम् ॥ ३५ ॥

कदाचिदात्मविषयसंयमे प्रवृत्तस्तत्प्रभावादमूर्थान्तरसिद्धीरधिगम्य कृतार्थंमन्यः संयमाद्विरमेदत आह । ते समाधावुपसर्गा व्युत्थाने सिद्धयः । व्युत्थितचित्तैर्हि ताः सिद्धीरभिमन्यते । जन्मदुर्गत इव द्रविणकणिकामपि द्रविणस-

**बन्धकारणशैथिल्यात्प्रचारसंवेदनाच्च चित्तस्य परशरीरावेशः ॥ ३७ ॥**

**उदानजयाज्जलपङ्ककण्टकादिष्वसङ्ग उत्क्रान्तिश्च ॥ ३८ ॥**

हितचित्तस्योत्पद्यमाना उपसर्गास्तद्दर्शनप्रत्यनीकत्वात् । व्युत्थितचित्तस्योत्पद्यमानाः सिद्धयः ॥ ३६ ॥

बन्धकारणशैथिल्यात्प्रचारसंवेदनाच्च चित्तस्य परशरीरावेशः । लोलीभूतस्य मनसोऽप्रतिष्ठस्य शरीरे कर्माशयवशाद्बन्धः प्रतिष्ठेत्यर्थः । तस्य कर्मणो बन्धकारणस्य शैथिल्यं समाधिबलाद्भवति । प्रचारसंवेदनं च चित्तस्य समाधिजमेव कर्मबन्धक्षयात्स्वचित्तस्य प्रचारसंवेदनाच्च योगी चित्तं स्वशरीरान्निष्कृष्य शरीरान्तरेषु निक्षिपति निक्षिप्तं चित्तं चेन्द्रियाण्यनुपतन्ति । यथा मधुकरराजानं मक्षिका उत्पतन्तमनूत्पतन्ति निविशमानमनुनिविशन्ते तथेन्द्रियाणि परशरीरावेशे चित्तमनुविधीयन्त इति ॥ ३७ ॥

उदानजयाज्जलपङ्ककण्टकादिष्वसङ्ग उत्क्रान्तिश्च । समस्तेन्द्रि-

---

म्भारम् । योगिना तु समाहितचित्तेनोपनताभ्योऽपि ताभ्यो विरन्तव्यम् । अभिम-हिततापनयात्यन्तिकोपशमरूपपरमपुरुषार्थः स इत्यत्र कथं तत्प्रत्यनीकासु सिद्धिषु रज्येतेति सूत्रभाष्ययोरर्थः ॥ ३६ ॥

तदेव ज्ञानरूपमैश्वर्यं पुरुषदर्शनान्तं संयमफलमुक्त्वा क्रियारूपमैश्वर्यं संयमफलमाह । बन्धकारणशैथिल्यात्प्रचारसंवेदनाच्च चित्तस्य परशरीरावेशः । समाधिबलादिति बन्धकारणविषयसंयमबलात्प्राधान्यात्समाधिग्रहणम् । प्रचरत्यनेनास्मिन्वेति प्रचारः । चित्तस्य गमागमाध्वानो नाड्यस्तस्मिन्प्रचारे संयमात्तद्वेदनम् । अप्रतिबद्धमप्युन्मार्गेण गच्छत्तस्माद्बन्धकारणशैथिल्याच्च तेन प्रतिबध्यते । ... स्वशरीरादप्रत्यूहं निष्क्रामति । ननु परशरीरमात्माधिष्ठितं तत्कथं प्रचारोऽपि गन्तव्यः । इन्द्रियाणि च चित्तानुसारीणि परशरीरे यथाधिष्ठानं निविशन्त इति ॥ ३७ ॥

उदानजयाज्जलपङ्ककण्टकादिष्वसङ्ग उत्क्रान्तिश्च । समस्तेन्द्रियवृत्तिर्जीवनं

## समानजयाज्ज्वलनम् ॥ ३९ ॥

## श्रोत्राकाशयोः संबन्धसंयमाद्दिव्यं श्रोत्रम् ॥ ४० ॥

यवृत्तिः प्राणादिलक्षणा जीवनं तस्य क्रिया पञ्चतयी प्राणो मुखनासिकागतिराहृदयवृत्तिः। समं नयनात्समानश्चानाभिवृत्तिः। अपनयनादपान आपादतलवृत्तिः। उन्नयनादुदान आशिरोवृत्तिः। व्यापी व्यान इति। एषां प्रधानं प्राणः। उदानजयाज्जलपङ्ककण्टकादिष्वसङ्ग उत्क्रान्तिश्च प्रायणकाले भवति तां वशित्वेन प्रतिपद्यते ॥ ३८ ॥

समानजयाज्ज्वलनम्। जितसमानस्तेजस उपध्मानं कृत्वा ज्वलयति ॥ ३९ ॥

श्रोत्राकाशयोः संबन्धसंयमाद्दिव्यं श्रोत्रम्। सर्वश्रोत्राणामाकाशं

---

प्राणादिलक्षणा प्राणादयो लक्षणं यस्याः सा तथोक्ता। द्वयीन्द्रियाणां वृत्तिर्बाह्याभ्यन्तरी च। बाह्या रूपाद्यालोचनलक्षणा। आभ्यन्तरी तु जीवनं स हि प्रयत्नभेदः। शरीरोपगृहीतमारुतक्रियाभेदहेतुः सर्वकरणसाधारणः। यथाहुः। सामान्यकरणवृत्तिः प्राणाद्या वायवः पञ्चेति। तैरस्य लक्षणीयत्वात्तस्य प्रयत्नस्य क्रियाकार्यं पञ्चतयी। प्राण आनासिकाग्रादाच हृदयादवस्थितः। अशितपीताहारपरिणतिभेदं रसं तत्र तत्र स्थाने सममनुरूपं नयन्समानः। आहृदयादाच नाभेरस्यावस्थानम्। मूत्रपुरीषगर्भादीनामपनयनहेतुरपानः। आनाभेराच पादतलादस्य वृत्तिः। उन्नयनादूर्ध्वं नयनाद्रसादीनामुदानः। आनासिकाग्रादाच शिरसो वृत्तिरस्य। व्यापी व्यानः। एषामुक्तानां प्रधानं प्राणस्तदुत्क्रमे सर्वोत्क्रमश्रुतेः। प्राणमुत्क्रामन्तमनु सर्वे प्राणा उत्क्रामन्तीति। तदेवं प्राणादीनां क्रियास्थानभेदेन भेदं प्रतिपाद्य सूत्रार्थमवतारयति। उदानजयादिति। उदाने कृतसंयमस्तज्जयाज्जलादिभिर्न प्रतिहन्यते। उत्क्रान्तिश्चार्चिरादिमार्गेण भवति प्रायणकाले तस्मात्तामुत्क्रान्तिं वशित्वेन प्रतिपद्यते। प्राणादिसंयमात्तद्विजये विभूतय एव ताः क्रियास्थानविजयादिभेदात्प्रतिपत्तव्याः ॥ ३८ ॥

समानजयाज्ज्वलनम्। तेजसः शारीरस्योपध्मानमुत्तेजनम् ॥ ३९ ॥

स्वार्थसंयमादन्वाचयशिष्टं श्रावणाद्युक्तं संप्रति श्रावणाद्यर्थादेव संयमाच्छ्रावणादि भवतीत्याह। श्रोत्राकाशयोः संबन्धसंयमाद्दिव्यं श्रोत्रम्। संयमविषय

प्रतिष्ठा सर्वशब्दानां च। यथोक्तम्। तुल्यदेशश्रवणानामेकदेशश्रुतित्वं सर्वेषां भवतीति। तच्चैतदाकाशस्य लिङ्गम्। अनावरणं चोक्तम्। तथामूर्तस्याप्यन्यत्रानावरणदर्शनाद्विभुत्वमपि प्रख्या-

---

श्रोत्राकाशयोः सम्बन्धमाधाराधेयभावमाह। सर्वश्रोत्राणामाहङ्कारिकाणामप्याकाश कर्णशष्कुलीविवर प्रतिष्ठा तदायतन श्रोत्र तदुपकारापकाराभ्यां श्रोत्रस्योपकारापकारदर्शनात्। शब्दाना च श्रोत्रसहकारिणा पार्थिवादिशब्दग्रहणे कर्तव्ये कर्णशष्कुलीसुषिरवर्ति श्रोत्र स्वाश्रयनभोगतासाधारणशब्दमपेक्षते। गन्धादिषु गन्धादिषु इव सहकारिभिर्घ्राणादिभिर्ग्राह्य पृथिव्यादिवर्ति गन्धाद्यालोचने कार्ये दृष्टमाहङ्कारिकाणामपि घ्राणरसनत्वक्चक्षु श्रोत्र भूताधिष्ठानमेव भूतोपकारापकाराभ्यां घ्राणादीनामुपकारापकारदर्शनादित्युक्तम्। तदेवं श्रोत्रमाहङ्कारिकमय प्रतिसमयस्वान्तमणिकल्पेन वक्तृवक्त्रसमुत्पन्नेन वक्त्रस्थेन शब्देनाकृष्ट स्ववृत्तिपरम्परया वक्तृवक्त्रभागत शब्दमालोचयति। तथाच दिग्देशवर्तिशब्दप्रतीति प्राणभृन्मानस नासति बाधनेऽप्रमाणीकृता भविष्यतीति। तथाच पञ्चशिखस्य वाक्यम्। तुल्यदेशश्रवणानामेकदेशश्रुतित्व सर्वेषा भवतीति। तुल्यदेशानि श्रवणानि श्रोत्राणि येषा चैत्रादीना ते तथोक्ता। सर्वेषा श्रवणान्याकाशवर्तीनीत्यर्थः। तच्च श्रोत्राधिष्ठानमाकाश शब्दगुणतन्मात्रादुत्पन्न शब्दगुणक येन शब्देन सहकारिणा पार्थिवादींच्छब्दान्गृह्णाति। तस्मात्सर्वेषामेकजातीया श्रुतिः शब्द इत्यर्थ। तदनेन श्रोत्राधिष्ठानत्वमाकाशस्य शब्दगुणत्व च दर्शितमिति। तदेकदेशश्रुतित्वमाकाशस्य लिङ्गम्। सा ह्येकजातीया शब्दव्यक्तिका श्रुतिर्यदाश्रया तदेवाकाशाख्यं द्रव्यम्। नहीदृशी श्रुतिमन्तरेण शब्दव्यक्ति। नचेदृशी श्रुति पृथिव्यादिगुणस्तस्य स्वात्मनि व्यञ्जकव्यञ्जकत्वानुपपत्तेरिति। अनावरण चाकाशलिङ्गम्। यद्याकाश नाभविष्यदन्योन्यसम्पिण्डितानि मूर्तानि न सूचीभिरप्यभेत्स्यन्त ततश्च सर्वैरेव सर्वमावृत्तं स्यात्। नच मूर्तद्रव्याभावमात्रादेवानावरणमस्त्वाभावस्य भावाश्रितत्वेन तदभावेऽभावात्। नच चितिशक्तिरनदाश्रया भवितुमर्हति। अपरिणामतयावच्छेदकत्वाभावात्। नच दिक्कालादय पृथिव्यादिद्रव्यव्यतिरिक्ता सन्ति। तत्साङ्ख्य परिणामभेदो नमम एवेति गदितमयदाज्ञन। अनावरणे चाकाशलिङ्गे सिद्धे यत्र यत्रावरण तत्र तत्र सर्वत्राकाशनिर्माणमङ्गादलमप्याकाशस्य सिद्धमित्याह। तथाऽमूर्तस्येति। श्रोत्रग्रहणे प्रमाण

**कायाकाशयोः संबन्धसंयमाल्लघुतूलसमापत्तेश्चाकाशगमनम् ॥ ४१ ॥**

**बहिरकल्पिता वृत्तिर्महाविदेहा ततः प्रकाशावरणक्षयः ॥ ४२ ॥**

तमाकाशस्य शब्दग्रहणनिमित्तं श्रोत्रम् । बधिराबधिरयोरेकः शब्दं गृह्णात्यपरो न गृण्हातीति तस्माच्छ्रोत्रमेव शब्दविषयम् । श्रोत्राकाशयोः संबन्धे कृतसंयमस्य योगिनो दिव्यं श्रोत्रं प्रवर्तते ॥ ४० ॥

कायाकाशयोः संबन्धसंयमाल्लघुतूलसमापत्तेश्चाकाशगमनम् । यत्र कायस्तत्राकाशं तस्यावकाशदानात्कायस्य तेन संबन्धावाप्तिस्तत्र कृतसंयमो जित्वा तत्संबन्धं लघुषु वा तूलादिष्वापरमाणुसमापत्तिं लब्ध्वा जितसंबन्धो लघुर्भवति लघुत्वाच्च जले पादाभ्यां विहरति ततस्तूर्णनाभितन्तुमात्रे विहृत्य रश्मिषु विहरति ततो यथेष्टमाकाशगतिरस्य भवतीति ॥ ४१ ॥

बहिरकल्पितावृत्तिर्महाविदेहा ततः प्रकाशावरणक्षयः । शरी-

---

माह । शब्दग्रहणेति । क्रिया हि करणसाध्या दृष्टा । यथा छिदादिर्वास्यादिसाध्या तदिह शब्दग्रहणक्रिययापि करणसाध्यया भवितव्यं यच्च करणं तच्च श्रोत्रमिति । अथास्याश्चक्षुरादय एव कस्मात्करणं न भवन्तीत्यत आह । बधिराबधिरयोरिति । अन्वयव्यतिरेकाभ्यामवधारणम् । उपलक्षणं चैतत्त्वग्वातयोश्चक्षुस्तेजसो रसनोदकयोर्नासिकापृथिव्योः सम्बन्धसंयमाद्दिव्यलगाद्यप्यूहनीयम् ॥ ४० ॥

कायाकाशयोः सम्बन्धसंयमाल्लघुतूलसमापत्तेश्चाकाशगमनम् । कायाकाशसम्बन्धसंयमाद्वा लघुनि वा तूलादौ कृतसंयमात्समापत्तिं चेतसस्तत्स्थतदञ्जनतां लब्ध्वेति । सिद्धिक्रममाह । जल इति ॥ ४१ ॥

अपरमपि परशरीरावेशहेतुं संयमं क्लेशकर्मविपाकक्षयहेतुं चाह । बहिरकल्पितावृत्तिर्महाविदेहा ततः प्रकाशावरणक्षयः । विदेहामाह । शरीरादिति । अक-

## स्थूलस्वरूपसूक्ष्मान्वयार्थवत्त्वसंयमाद्भूतजयः ॥४३॥

राद्बहिर्मनसो वृत्तिलाभो विदेहा नाम धारणा सा यदि शरीरप्रतिष्ठस्य मनसो बहिर्वृत्तिमात्रेण भवति सा कल्पितेत्युच्यते । या तु शरीरनिरपेक्षा बहिर्भूतस्यैव मनसो बहिर्वृत्तिः सा खल्वकल्पिता तत्र कल्पितया साधयन्त्यकल्पितां महाविदेहामिति । यया परशरीराण्याविशन्ति योगिनः । ततश्च धारणातः प्रकाशात्मनो बुद्धिसत्त्वस्य यदावरणं क्लेशकर्मविपाकत्रयं रजस्तमोमूलं तस्य च क्षयो भवति ॥ ४२ ॥

स्थूलस्वरूपसूक्ष्मान्वयार्थवत्त्वसंयमाद्भूतजयः । तत्र पार्थिवाद्याः शब्दादयो विशेषाः सहकारादिभिर्धर्मैः स्थूलशब्देन परिभाषिताः । एतद्भूतानां प्रथमं रूपम् । द्वितीयं रूपं स्वसा-

---

ल्पिताया महाविदेहाया य उपायस्तत्प्रदर्शनाय कल्पितां विदेहामाह । सा यदीति । वृत्तिमात्रं कल्पनाज्ञानमात्रं तेन । महाविदेहामाह । या त्विति । उपायोपेयते कल्पिताकल्पितयोराह । तत्रेति । किं परशरीरावेशमात्रमितो नेत्याह । ततश्चेति । ततो धारणातो महाविदेहाया मनःप्रवृत्तेः सिद्धिः क्लेशाश्च कर्म च ताभ्यां विपाकत्रयं जात्यायुर्भोगास्तदेतद्रजस्तमोमूलं विगलितरजस्तमसः सत्त्वमात्राद्विवेकख्यातिमात्रसमुत्पादात्तदेतद्विपाकत्रयं रजस्तमोमूलतया तदात्मकं सद्बुद्धिसत्त्वमावृणोति । तत्क्षयाच्च निरावरणं योगिचित्तं यथेच्छं विहरति विजानाति चेति ॥ ४२ ॥

स्थूलस्वरूपसूक्ष्मान्वयार्थवत्त्वसंयमाद्भूतजयः । स्थूलं च स्वरूपं च सूक्ष्मं चान्वयश्चार्थवत्त्वं चेति स्थूलस्वरूपसूक्ष्मान्वयार्थवत्त्वानि तेषु संयमात्तज्जयः । स्थूलमाह । तत्रेति । पार्थिवा आप्यास्तैजसा वायवीया आकाशीयाः शब्दस्पर्शरूपरसगन्धा यथासम्भवं विशेषाः षड्जगान्धारादयः शीतोष्णादयो नीलपीतादयः कषायमधुरादयः सुरभ्यादय एते हि नामरूपप्रयोजनैः परस्परतो भिद्यन्त इति विशेषाः । एतेषां पञ्च पृथिव्यां गन्धवर्जं चत्वारोऽप्सु गन्धरसवर्जं त्रयस्तेजसि गन्धरसरूपवर्जं द्वौ नभस्वति शब्द एवाकाशे त एते ईदृशा विशेषाः सहकारादिभिर्धर्मैः स्थूलशब्देन परिभाषिताः शास्त्रे । तत्रापि पार्थिवास्तावद्धर्माः । आकारो गौरवं रौक्ष्यं वरणं स्थैर्यमेव च । वृत्तिर्भेदः क्षमा कार्ष्ण्यं काठिन्यं सर्व-

**मान्यं मूर्तिर्भूमिः । स्नेहो जलं वह्निरुष्णता वायुः प्रणामी सर्वतो गतिराकाश इत्येतत्स्वरूपशब्देनोच्यते । अस्य सामान्यस्य शब्दादयो विशेषाः । तथा चोक्तम् । एकजातिसमन्वितानामेषां धर्ममात्रव्यावृत्तिरिति । सामान्यविशेषसमुदायोऽत्र द्रव्यं द्रष्-**

---

भोग्यता । अपां धर्माः । स्नेहः सौक्ष्म्यं प्रभा शौक्ल्यं मार्दवं गौरवं च यत् । शैत्यं रक्षा पवित्रत्व सन्धानं चौदका गुणाः । तैजसा धर्माः । ऊर्ध्वभाक्पाचकं दग्धृ पावक लघु भास्वरम् । प्रध्वंस्योजस्वि वै तेजः पूर्वाभ्यां भिन्नलक्षणम् । वायवीया धर्माः । तिर्यग्यान पवित्रत्वमाक्षेपो नोदनं बलम् । चलमच्छायता रौक्ष्य वायोर्धर्माः पृथग्विधाः । आकाशीया धर्माः । सर्वतो गतिरव्यूहोऽविष्टम्भश्चेति ते त्रयः । आकाशधर्मा व्याख्याताः पूर्वधर्मविलक्षणा इति । त एत आकारप्रभृतयो धर्मास्तैः सहेति । आकारश्च सामान्यविशेषो गोत्वादिः । द्वितीयं रूपमाह । द्वितीयं रूपं स्वसामान्यम् । मूर्तिः सांसिद्धिक काठिन्यम् । स्नेहो जलम् । मज्जा पुष्टिबलाधानहेतुः । वह्निरुष्णता औदार्ये सौर्ये भौमे च सर्वत्रैव तेजसि समवेतोष्णतेति । सर्वं चैतद्धर्मधर्मिणोरभेदविवक्षयाभिधानम् । वायुः प्रणामी वहनशीलः । तदाह । चलनेन तृणादीनां शरीरस्पन्दनेन च । सर्वगं वायुसामान्यं नामिलमनुमीयते । सर्वतोगतिराकाशः सर्वत्र शब्दोपलब्धिदर्शनात् । श्रोत्राश्रयाकाशगुणेन हि शब्देन पार्थिवादिशब्दोपलब्धेरित्युपपादितमधस्तात् । एतत्स्वरूपशब्देनोक्तम् । अस्यैव मूर्त्यादिसामान्यस्य शब्दादयः षड्जादय उष्णत्वादयः शुक्लत्वादयः कषायत्वादयः सुरभित्वादयो मूर्त्यादीनां सामान्यानां भेदाः । सामान्यान्यपि मूर्त्यादीनि जम्बीरपनसामलकफलादीनि रसादिभेदात्परस्परं व्यावर्तन्ते । तेनैतेषामेते रसादयो विशेषाः । तथा चोक्तम् । एकजातिसमन्वितानां प्रत्येकं पृथिव्यादीनामेकैकया जात्या मूर्तिस्नेहादिना समन्वितानामेषां षड्जादिधर्ममात्रव्यावृत्तिरिति । तदेवं सामान्यं मूर्त्याद्युक्तं विशेषाश्च शब्दादय उक्ताः । ये चाहुः सामान्यविशेषाश्रयो द्रव्यमिति तान्प्रत्याह । सामान्यविशेषसमुदायोऽत्र दर्शने द्रव्यम् । येऽपि तदाश्रयो द्रव्यमास्थिषत तैरपि तत्समुदायोऽनुभूयमानो नापह्नोतव्यः । न च तदपह्नवे तयोराधारो द्रव्यमिति भवति । तस्मात्तदेवास्तु द्रव्यम् । ननु ताभ्यां तत्समुदायाच्च तदाधारमपरं द्रव्यमुपलभामहे । भागेभ्यो भागसमुदायाच्च तदाधारमपरं पृथग्विधं शिरस्समूहो द्रव्यमित्युक्तं तत्र धनुरग्रान्तं द्रव्यमिति भ्रमापनुत्तये समुदायिनो द्रव्यमिति निर्धारयितुं समूहम-

व्यम् । द्विष्ठो हि समूहः प्रत्यस्तमितभेदावयवानुगतः शरीरं वृक्षो यूथं वनमितिशब्देनोपात्तभेदावयवानुगतः समूहः । उभये देवमनुष्याः । समूहस्य देवा एव एको भागो मनुष्या द्वितीयो भागस्ताभ्यामेवाभिधीयते समूहः । स च भेदाभेदविवक्षितः । आम्राणां वनं ब्राह्मणानां सङ्घ इति । आम्रवणं ब्राह्मणसङ्घ इति । स पुनर्द्विविधो युतसिद्धावयवोऽयुतसिद्धावयवश्च । युतसिद्धावयवः समूहो वनं सङ्घ इति । अयुतसिद्धावयवः सङ्घातः शरीरं वृक्षः परमाणुरिति । अयुत-

---

कारानाह । द्विष्ठो हीति । यस्मादेव तस्मान्न समूहमात्र द्रव्यमित्यर्थः ।
द्वाभ्या प्रकाराभ्या तिष्ठतीतिद्विष्ठः । एक प्रकारमाह । प्रत्यस्तमितेति ।
प्रत्यस्तमितो भेदो येपामवयवाना ते तथोक्ताः । प्रत्यस्तमितभेदा अवयवा यस्य
स तथोक्तः । एतदुक्त भवति । शरीरवृक्षयूथवनशब्देभ्यः समूहः प्रतीयमानो-
ऽप्रतीतावयवभेदस्तद्वाचकशब्दाप्रयोगात्समूह एकोऽवगम्यत इति । युतायुतसि-
द्धावयवत्वेन चेतनाचेतनत्वेन चोदाहरणचतुष्टयम् । युतायुतसिद्धावयवत्व चाग्रे
वक्ष्यते । द्वितीय प्रकारमाह । शब्देनोपात्तभेदावयवानुगतः समूह
उभये देवमनुष्या इति । देवमनुष्या इतिहिशब्देनोभयशब्दवाच्यस्य समू-
हस्य भागौ भिन्नावुपात्तौ । ननूभयशब्दात्तावदवयवभेदो न प्रतीयते तत्कथ-
मुपात्तभेदावयवानुगत इत्यत आह । ताभ्या भागाभ्यामेव च समूहोऽभिधी;
यते । उभयशब्देन भागद्वयवाचिशब्दसहितेन समूहो वाच्यः । वाक्यस्य
वाक्यार्थवाचकत्वादितिभावः । पुनर्द्वैविध्यमाह । स चेति । भेदेन चाभेदेन च
विवक्षितः । भेदविवक्षितमाह । आम्राणां वनं ब्राह्मणानां सङ्घ इति ।
भेद एव षष्ठीश्रुतेः । यथा गर्गाणा गौरिति । अभेदविवक्षितमाह । आम्रवणं
ब्राह्मणसङ्घ इति । आम्राश्च ते वन चेतिसमूहसमूहिनोरभेद विवक्षिता
सामानाधिकरण्यमित्यर्थः । विधान्तरमाह । स पुनर्द्विविधः । युतसिद्धावयवः
समूहः । युतसिद्धा. पृथक्सिद्धा. सान्तराला अवयवा यस्य स तथोक्त. । वृक्ष
वनमिति । सान्तराला हि तदवयवा वृक्षाश्च गावश्चायुतसिद्धावयवश्च समूहो
वृक्षो गौः परमाणुरिति । निरन्तरा हि तदवयवा. सामान्यविशेषा वा गात्रा-
दयो वेति । तदेतेषु समूहेषु द्रव्यभूत समूह निर्धारयति । अयुतसिद्धेति ।

**ततोऽणिमादिप्रादुर्भावः कायसम्पत्तद्धर्मानभिघातश्च ॥ ४४ ॥**

सिद्धावयवभेदानुगतः समूहो द्रव्यमितिपतञ्जलिः । एतत्स्वरूपमित्युक्तम् । अथ किमेषां सूक्ष्मरूपं तन्मात्रं भूतकारणं तस्यैकोऽवयवः परमाणुः सामान्यविशेषात्मा अयुतसिद्धावयवभेदानुगतः समुदाय इत्येवं सर्वं तन्मात्राण्येतत्तृतीयम् । अथ भूतानां चतुर्थं रूपं ख्यातिक्रियास्थितिशीला गुणाः कार्यस्वभावानुपातिनोऽन्वयशब्देनोक्ताः । अथैषां पञ्चमं रूपमर्थवत्त्वं भोगापवर्गार्थता गुणेष्वेवान्वयिनी । गुणास्तन्मात्रभूतभौतिकेष्वितिसर्वमर्थवत् । तेष्विदानीं भूतेषु पञ्चसु पञ्चरूपेषु रूपे संयमात्तस्य तस्य रूपस्य स्वरूपदर्शनं जयश्च प्रादुर्भवति । तत्र पञ्चभूतस्वरूपाणि जित्वा भूतजयीभवति । तज्जयाद्वत्सानुसारिण्य इव गावोऽस्य सङ्कल्पानुविधायिन्यो भूतप्रकृतयो भवन्ति ॥ ४३ ॥

ततोऽणिमादिप्रादुर्भावः कायसम्पत्तद्धर्मानभिघातश्च । तत्रा-

---

तदेव मायिक्कि द्रव्यं व्युत्पाद्य प्रकृतमुपसंहरति । एतत्स्वरूपमित्युक्तमिति । तृतीय रूप विवक्षुः पृच्छति । अथेति । उत्तरमाह । तन्मात्रमिति । तस्यैकोऽवयवः परिमाणभेदः परमाणुः सामान्य मूर्तिः शब्दादयो विशेषास्तदात्मा अयुतसिद्धा निरन्तरा येऽवयवाः सामान्यविशेषास्तद्भेदेष्वनुगतः समुदायः । यथाच परमाणुः सूक्ष्म रूपमेवं सर्वतन्मात्राणि सूक्ष्म रूपमिति । उपसंहरति । एतदिति । अथ भूताना चतुर्थं रूप ख्यातिक्रियास्थितिशीलागुणाः कार्यस्वभावमनुपतितुमनुगन्तु शील येषा ते तथोक्ताः । अत एवान्वयशब्देनोक्ताः । अथैषा पञ्चम रूपमर्थवत्त्व विवृणोति । भोगेति । नन्वेवमपि सन्तु गुणा अर्थवन्तस्तत्कार्याणा तु कुतोऽर्थवत्त्वमित्यत आह । गुणा इति । भौतिका गोघटादयः । तदेव सयमविषयमुक्त्वा सयम तत्फलं चाह । तेष्विति । भूतप्रकृतयो भूतस्वभावाः ॥ ४३ ॥

सङ्कल्पानुविधाने भूताना किं योगिनः सिध्यतीत्याह । ततोऽणिमादिप्रादु-

णिमा भवत्यणुः । लघिमा लघुर्भवति । महिमा महान्भवति । प्राप्तिरङ्गुल्यग्रेणापि स्पृशति चन्द्रमसम् । प्राकाम्यमिच्छानभिघातः । भूमावुन्मज्जति निमज्जति यथोदके । वशित्वं भूतभौतिकेषु वशीभवत्यवश्यश्चान्येषाम् । ईशितृत्वं तेषां प्रभवाप्ययव्यूहानामीष्टे । यत्र कामावसायित्वं सत्यसङ्कल्पता यथा सङ्कल्पस्तथा भूतप्रकृतीनामवस्थानम् । नच शक्तोऽपि पदार्थविपर्यासं करोति । कस्मात् । अन्यस्य यत्र कामावसायिनः पूर्वसिद्धस्य तथा भूतेषु सङ्कल्पादिति । एतान्यष्टावैश्वर्याणि कायस-

---

र्भावः कायसम्पत्तद्धर्मानभिघातश्च । स्थूलसंयमजयाच्चतस्रः सिद्धयो भवन्तीत्याह । तत्राणिमा महानपि भवत्यणुः । लघिमा महानपि लघुर्भूत्वेषीकातूलवदाकाशे विहरति । महिमाल्पोऽपि हि नागनगगगनपरिमाणो भवति । प्राप्तिः सर्वे भावाः सन्निहिता भवन्ति योगिनस्तद्यथा भूमिष्ठ एवाङ्गुल्यग्रेण स्पृशति चन्द्रमसम् । स्वरूपसंयमविजयात्सिद्धिमाह । प्राकाम्यमिच्छानभिघातो नास्य रूपं भूतस्वरूपैर्मूर्त्यादिभिर्हन्यते । भूमावुन्मज्जति निमज्जति च यथोदके । सूक्ष्मविषयसंयमजयात्सिद्धिमाह । वशित्वं भूतानि पृथिव्यादीनि भौतिकानि गोघटादीनि तेषु वशी स्वतन्त्रो भवति तेषां त्ववश्यस्तत्कारणतन्मात्रपृथिव्यादिपरमाणुवशीकारात्तत्कार्यवशीकारस्तेन यानि यथावस्थापयति तानि तथावतिष्ठन्त इत्यर्थः । अन्वयविषयसंयमजयात्सिद्धिमाह । ईशितृत्वं तेषां भूतभौतिकानां विजितमूलप्रकृतिः सन्यः प्रभव उत्पादो यश्चाप्ययो विनाशो यश्च व्यूहो यथावदवस्थापनं तेषामभीष्टे । अर्थवत्त्वसंयमात्सिद्धिमाह । यत्र कामावसायित्वं सत्यसङ्कल्पता । विजितगुणार्थवत्तो हि योगी यद्यदर्थतया सङ्कल्पयति तत्तत्स्मै प्रयोजनाय कल्पते । विषमप्यमृतकार्ये सङ्कल्प्य भोजयन् जीवयतीति । स्यादेतद्यथाशक्तिविपर्यासं करोत्येवं पदार्थविपर्यासमपि कस्मान्न करोति । तथा च चन्द्रमसमादित्यं कुर्यात् । कुहूं च सिनीवालीमित्यत आह । नच शक्तोऽपीति । न खल्वेते यत्र कामावसायिनस्तत्रभवतः परमेश्वरस्याज्ञामतिक्रमितुमुत्सहन्ते । शक्तयस्तु पदार्थानां जातिदेशकालावस्थाभेदेनानियतस्वभावा इतियुज्यते तासु तदिच्छानुविधानमिति । एतान्यष्टावैश्वर्याणि तद्धर्मानभिघात इति । अणिमा-

**रूपलावण्यबलवज्रसंहननत्वानि कायसम्पत् ॥ ४५ ॥**

**ग्रहणस्वरूपास्मितान्वयार्थवत्त्वसंयमादिन्द्रियजयः ॥ ४६ ॥**

ष्यद्वक्ष्यमाणा तद्धर्मानभिघातश्च पृथ्वी मूर्त्या न निरुणद्धि योगिनः शरीरादिक्रियाशीलामप्यनुविशतीति । नापः स्निग्धाः क्लेदयन्ति । नाग्निरुष्णो दहति । न वायुः प्रणामी वहत्यनावरणात्मकेऽप्याकाशे भवत्यावृत्तकायः सिद्धानामप्यदृश्यो भवति ॥ ४४ ॥

रूपलावण्यबलवज्रसंहननत्वानि कायसम्पत् । दर्शनीयः कान्तिमानतिशयबलो वज्रसंहननश्चेति ॥ ४५ ॥

ग्रहणस्वरूपास्मितान्वयार्थवत्त्वसंयमादिन्द्रियजयः । सामान्यविशेषात्मा शब्दादिर्विषयः । तेष्विन्द्रियाणां वृत्तिर्ग्रहणम् । नच तत्सामान्यमात्रग्रहणाकारं कथमनालोचितः स विषयविशेष इन्द्रियेण मनसा वानुव्यवसीयेतेति । स्वरूपं पुनः

---

दिप्रादुर्भाव इत्यनेनैव तद्धर्मानभिघातसिद्धौ पुनरुपादानं कायसिद्धिवत् । एतत्सङ्ग्रोपवद्धसकलविषयसंयमफलवत्त्वज्ञापनाय । सुगममन्यत् ॥ ४४ ॥

कायसम्पदमाह । रूपलावण्यबलवज्रसंहननत्वानि कायसम्पत् । वज्रस्येव संहननमवयवव्यूहो दृढो निबिडो यस्य स तथोक्तः ॥ ४५ ॥

जितभूतस्य योगिन इन्द्रियजयोपायमाह । ग्रहणस्वरूपास्मितान्वयार्थवत्त्वसंयमादिन्द्रियजयः । ग्रहणं च स्वरूपं चास्मिताचान्वयश्चार्थवत्त्वं च तेषु संयमस्तस्मादित्यर्थः । गृहीतिर्ग्रहणं तच्च ग्राह्याधीननिरूपणमिति । ग्राह्यं दर्शयति । सामान्यविशेषात्मेति । ग्राह्यमुक्त्वा ग्रहणमाह । तेष्विति । वृत्तिरालोचनं विषयाकारपरिणतिरितियावत् । ये त्वाहुः । सामान्यमात्रगोचरेन्द्रियवृत्तिरिति तान्प्रत्याह । नचेति । गृह्यत इतिग्रहणम् । न सामान्यमात्रगोचरं ग्रहणम् । बाह्येन्द्रियतन्त्रं हि मनो बाह्ये प्रवर्तते । अन्यथान्धबधिराद्यभावप्रसङ्गात् । तदिह यदि न विशेषविषयमिन्द्रियं तेनासावनालोचितो विशेष इतिकथं मनसानुव्यवसीयेत । तस्मात्सामान्यविशेषविषयमिन्द्रियालोचनमिति । तदेतद्ग्रहणमिन्द्रियाणां प्रथमं रूपम् । द्वितीयं रूपमाह । स्वरूपं पुनरिति । अहङ्कारो हि सत्त्वभागे-

## ततो मनोजवित्वं विकरणभावः प्रधानजयश्च ॥ ४७ ॥

प्रकाशात्मनो बुद्धिसत्त्वस्य सामान्यविशेषयोरयुतसिद्धावयवभेदानुगतः समूहो द्रव्यमिन्द्रियं तेषां तृतीयं रूपमस्मितालक्षणोऽहङ्कारः तस्य सामान्यस्येन्द्रियाणि विशेषाश्चतुर्थं रूपं व्यवसायात्मकाः प्रकाशक्रियास्थितिशीला गुणा येषामिन्द्रियाणि साहङ्काराणि परिणामः पञ्चमं रूपं गुणेषु यदनुगतं पुरुषार्थवत्त्वमिति । पञ्चस्वेवैतेष्विन्द्रियरूपेषु यथाक्रमं संयमस्तत्र तत्र जयं कृत्वा पञ्चस्वरूपजयादिन्द्रियजयः प्रादुर्भवति योगिनः ॥ ४६ ॥

ततो मनोजवित्वं विकरणभावः प्रधानजयश्च । कायस्यानुत्तमो गतिलाभो मनोजवित्वम् । विदेहानामिन्द्रियाणामभिप्रेतकालदेशविषयापेक्षो वृत्तिलाभो विकरणभावः । सर्वप्रकृतिविकारवशित्वं प्रधानजय इत्येतास्तिस्रः सिद्धयो मधुप्रतीका उच्यन्ते । एताश्च करणपञ्चकस्वरूपजयादधिगम्यन्ते ॥ ४७ ॥

---

नात्मीयेनेन्द्रियाण्यजीजनत् । अतो यत्तत्र करणत्वं सामान्यं यच्च नियतरूपादिविषयत्वं विशेषस्तदुभयमपि प्रकाशात्मकमित्यर्थः । तेषां तृतीयं रूपमिति । अहङ्कारो हीन्द्रियाणां कारणमिति । यत्रेन्द्रियाणि तत्र तेन भवितव्यमिति सर्वेन्द्रियसाधारण्यात्सामान्यमिन्द्रियाणामित्यर्थः । चतुर्थं रूपमिति । गुणानां हि द्वैरूप्यं व्यवसेयात्मकत्वं व्यवसायात्मकत्वं च । तत्र व्यवसेयात्मकतां ग्राह्यतामास्थाय पञ्चतन्मात्राणि भूतभौतिकानि निर्मिमीते । व्यवसायात्मकत्वं तु ग्रहणरूपमास्थाय साहङ्काराणीन्द्रियाणीत्यर्थः । शेषं सुगमम् ॥ ४६ ॥

पञ्चरूपेन्द्रियजयात्सिद्धीराह । ततो मनोजवित्वं विकरणभावः प्रधानजयश्च । विदेहानामिन्द्रियाणां करणभावो विकरणभावः । देशः काश्मीरादिः । कालोऽतीतादिर्विषयः सूक्ष्मादिः । सान्वयेन्द्रियजयात्सर्वप्रकृतिविकारवशित्वं प्रधानजयः । ता एताः सिद्धयो मधुप्रतीका इत्युच्यन्ते योगशास्त्रनिष्णातैः । स्यादेतदिन्द्रियजयादिन्द्रियाणि सविषयाणि वश्यानि भवन्तु प्रधानादीनां तत्कारणानां किमायातमित्यत आह । एताश्चेति । करणानामिन्द्रियाणां पञ्चरूपाणि ग्रहणादीनि तेषां जयात् । एतदुक्तं भवति । नेन्द्रियमात्रजयस्यैताः सिद्धयोऽपितु पञ्चरूपस्य तदन्तर्गतं च प्रधानादीति ॥ ४७ ॥

## सत्त्वपुरुषान्यताख्यातिमात्रस्य सर्वभावाधिष्ठातृत्वं सर्वज्ञातृत्वं च ॥ ४८ ॥

## तद्वैराग्यादपि दोषबीजक्षये कैवल्यम् ॥ ४९ ॥

सत्त्वपुरुषान्यताख्यातिमात्रस्य सर्वभावाधिष्ठातृत्वं सर्वज्ञातृत्वं च । निर्धूतरजस्तमोमलस्य बुद्धिसत्त्वस्य परे वैशारद्ये परस्यां वशीकारसंज्ञायां वर्तमानस्य सत्त्वपुरुषान्यताख्यातिमात्ररूपप्रतिष्ठस्य सर्वभावाधिष्ठातृत्वम् । सर्वात्मानो गुणा व्यवसायव्यवसेयात्मकाः स्वामिनं क्षेत्रज्ञं प्रत्यशेषदृश्यात्मत्वेनोपस्थिता इत्यर्थः । सर्वज्ञातृत्वं सर्वात्मनां गुणानां शान्तोदिताव्यपदेश्यधर्मत्वेन व्यवस्थितानामक्रमोपारूढं विवेकजं ज्ञानमित्यर्थः । इत्येषा विशोका नाम सिद्धिर्यां प्राप्य योगी सर्वज्ञः क्षीणक्लेशबन्धनो वशी विहरति ॥ ४८ ॥

तद्वैराग्यादपि दोषबीजक्षये कैवल्यम् । यदास्यैवंभवति क्लेशकर्मक्षये सत्त्वस्यायं विवेकप्रत्ययो धर्मः सत्त्वं च हेयपक्षे न्यस्तं

---

त एते ज्ञानक्रियारूपैश्वर्यहेतवः संयमाः साक्षात्पारम्पर्येण च स्वसिद्ध्युपहारसंपादितश्रद्धाद्वारेण यदर्थास्तस्याः सत्त्वपुरुषान्यताख्यातेरवान्तरविभूतीर्दर्शयति । सत्त्वपुरुषान्यताख्यातिमात्रस्य सर्वभावाधिष्ठातृत्वं सर्वज्ञातृत्वं च । निर्धूतरजस्तमोमलतया वैशारद्यं ततः परावशीकारसंज्ञा । रजस्तमोभ्यामुपप्लुतं हि चित्तसत्त्वमवश्यमासीत्तदुपशमे तु तद्वश्यं योगिनो वशिनस्तस्मिन्वश्ये योगिनः सत्त्वपुरुषान्यताख्यातिमात्ररूपप्रतिष्ठस्य सर्वभावाधिष्ठातृत्वम् । एतदेव विवृणोति । सर्वात्मान इति । व्यवसायव्यवसेयात्मानो जडप्रकाशरूपा इत्यर्थः । तदनेन क्रियैश्वर्यमुक्तम् । ज्ञानैश्वर्यमाह । सर्वज्ञातृत्वमिति । अस्या अपि द्विविधायाः सिद्धेर्वैराग्याय योगिजनप्रसिद्धां संज्ञामाह । एषा विशोकेति । क्लेशाश्च बन्धनानि च कर्माणि तानि क्षीणानि यस्य स तथा ॥ ४८ ॥

संयमान्तराणां पुरुषार्थाभासफलत्वाद्विवेकख्यातिसंयमस्य पुरुषार्थतां दर्शयितुं विवेकख्यातेः परवैराग्योपजननद्वारेण कैवल्यं फलमाह । तद्वैराग्यादपि दोषबीजक्षये कैवल्यम् । यदास्य योगिनः क्लेशकर्मक्षये एवंज्ञानं भवति । किंभूतमि-

## स्थान्युपनिमन्त्रणे सङ्गस्मयाकरणं पुनरनिष्टप्रसङ्गात् ॥ ५० ॥

पुरुषश्चापरिणामी शुद्धोऽन्यः सत्त्वादित्येवमस्य ततो विरज्यमानस्य यानि क्लेशबीजानि दग्धशालिबीजकल्पान्यप्रसवसमर्थानि तानि सह मनसा प्रत्यस्तं गच्छन्ति । तेषु प्रलीनेषु पुरुषः पुनरिदं तापत्रयं न भुङ्क्ते । तदेतेषां गुणानां मनसि कर्मक्लेशविपाकस्वरूपेणाभिव्यक्तानां चरितार्थानामप्रतिप्रसवे पुरुषस्यात्यन्तिको गुणवियोगः कैवल्यं तदा स्वरूपप्रतिष्ठा चितिशक्तिरेव पुरुष इति ॥ ४९ ॥

स्थान्युपनिमन्त्रणे सङ्गस्मयाकरणं पुनरनिष्टप्रसङ्गात् । चत्वारः खल्वमी योगिनः प्रथमकल्पिको मधुभूमिकः प्रज्ञाज्योतिरतिक्रान्तभावनीयश्चेति । तत्राभ्यासी प्रवृत्तमात्रज्योतिः प्रथमः । ऋतम्भरप्रज्ञो द्वितीयः । भूतेन्द्रियजयी तृतीयः सर्वेषु भावितेषु भावनी-

---

त्याह । सत्त्वस्यायं विवेकप्रत्ययो धर्मः । शेषं तत्र तत्र व्याख्यातत्वात्सुगमम् ॥ ४९ ॥

सम्प्रति कैवल्यसाधने प्रवृत्तस्य योगिनः प्रत्यूहसम्भवे तन्निराकरणकारणमुपदिशति । स्थान्युपनिमन्त्रणे सङ्गस्मयाकरण पुनरनिष्टप्रसङ्गात् । तानि स्थानानि येषां सन्ति ते स्थानिनो महेन्द्रादयस्तैरुपनिमन्त्रण तस्मिन्त्सङ्गश्च स्मयश्च न कर्तव्यः पुनरनिष्टप्रसङ्गात् । तत्र ये देवाः स्थानैरुपमन्त्रयन्ते त योगिनमेक निर्धारयितु यावन्तो योगिनः सम्भवन्ति तावत एवाह । चत्वार इति । तत्र प्रथमकल्पिकस्य स्वरूपमाह । तत्राभ्यासीति । प्रवृत्तमात्र न पुनर्वशीकृत ज्योतिर्ज्ञान परचित्तादिविषय यस्य स तथा । द्वितीयमाह । ऋतम्भरप्रज्ञ इति । यत्रेदमुक्तं ऋतम्भरा तत्र प्रज्ञेति । स हि भूतेन्द्रियाणि जिगीषुः । तृतीयमाह । भूतेन्द्रियजयीति । तेन हि स्थूलादिसयमेन च ग्रहणादिसयमेन च भूतेन्द्रियाणि जितानि । तमेवाह । सर्वेषु भावितेषु निष्पादितेषु भूतेन्द्रियजयात्परचित्तादिज्ञानादिषु कृतरक्षाबन्धो यतस्तेभ्यो न च्यवते भावनीयेषु निष्पादनीयेषु विशोकादिषु परवैराग्यपर्यन्तेषु कर्तव्यसाधनवान्पुरुषप्रयत्नस्य साधनविषयस्यैव साध्यनिष्पादक-

येषु कृतरक्षाबन्धः कृतकर्तव्यः साधनादिमान् । ... क्रान्तभावनीयस्तस्य चित्तप्रतिसर्ग एकोऽर्थः सप्तविधा अस्य भूमिप्रज्ञाः । तत्र मधुमतीं भूमिं साक्षात्कुर्वतो ब्राह्मणस्य नो देवाः सत्त्वविशुद्धिमनुपश्यन्तः स्थानैरुपनिमन्त्रयन्ते भो इहास्यतामिह रम्यतां कमनीयोऽयं भोगः कमनीयेयं कन्या रसायनमिदं जरामृत्युं बाधते वैहायसमिदं यानममी कल्पद्रुमाः पुण्या मन्दाकिनी सिद्धा महर्षय उत्तमा अनुकूला अप्सरसो दिव्ये श्रोत्रचक्षुषी वज्रोपमः कायः स्वगुणैस्सर्वमिदमुपार्जितमायुष्मता प्रतिपद्यतामिदमक्षयमजरममरं स्थानं देवानां प्रियमित्येवमभिधीयमानः सङ्गदोषान्भावयेद्घोरेषु संसाराङ्गारेषु पच्यमानेन मया जननमरणान्धकारे विपरिवर्तमानेन कथंचिदासादितः क्लेशतिमिरविनाशी योगप्रदीपस्तस्य चैते तृष्णायोनयो विषयवायवः प्रतिपक्षाः स खल्वहं लब्धालोकः कथमनया विषयमृगतृष्णया वञ्चितस्तस्यैव पुनः प्रदीप्तस्य संसाराग्नेरात्मानमिन्धनीकुर्यामिति । स्वस्ति वः स्वप्नोपमेभ्यः कृपणजनप्रार्थनीयेभ्यो विषयेभ्य इत्येवं निश्चितमतिः समाधिं भावयेत् । सङ्गमकृत्वा स्मयमपि न कुर्यादेवमहं देवानामपि प्रार्थनीय इति । स्मयादयं सुस्थितंमन्यतया मृत्युना केशेषु गृहीतमिवात्मानं न भावयिष्यति । तथा चास्य छिद्रान्तरप्रेक्षी नित्यं यत्नोपचर्यः प्रमादो लब्धविवरः

स्यात् । चतुर्थमाह । चतुर्थ इति । तस्य हि भगवतो जीवन्मुक्तस्य चरमदेहस्य चित्तप्रतिसर्ग एकोऽर्थः । तदेतेषु योगिषूपनिमन्त्रणविषय योगिनमवधारयति । तत्र मधुमतीमिति । प्रथमकल्पिके तावन्महेन्द्रादीनां तत्प्राप्तिशङ्कैव नास्ति । तृतीयोऽपि तैर्नोपनिमन्त्रणीयो भूतेन्द्रियवशित्वेनैव तत्प्राप्तेः । चतुर्थेऽपि परवैराग्यसम्पत्तेरासङ्गशङ्का दूरोत्सारितैवेति । पारिशेष्याद्द्वितीय एव निमन्त्रणीय ऋतम्भरप्रज्ञस्तदुपनिमन्त्रणविषय इति । वैहायसमाकाशगामि अक्षय अनिनाशि अजर सदाभिनवम् । स्मयकरणे दोषमाह । स्मयादयमिति । स्मयात्सुस्थितमन्यो नानित्यता भावयिष्यति । न तस्या अभिघासनीत्यर्थः । सुगम शेषम् । उक्ता कचि-

## क्षणतत्क्रमयोः संयमाद्विवेकजं ज्ञानम् ॥ ५१ ॥

ानुत्तम्भयिष्यति ततः पुनरनिष्टप्रसङ्गः । एवमस्य सङ्गस्मया-र्वितो भावितोऽर्थो दृढीभविष्यति भावनीयश्चार्थोऽभिमुखी-वेष्यतीति ॥ ५० ॥

क्षणतत्क्रमयोः संयमाद्विवेकजं ज्ञानम् । यथा अपकर्षपर्यन्तं व्यं परमाणुरेवं परमापकर्षपर्यन्तः कालः क्षणो यावता वा मयेन चलितः परमाणुः पूर्वदेशं जह्यादुत्तरदेशमुपसम्पद्येत स ालः क्षणः तत्प्रवाहाविच्छेदस्तु क्रमः क्षणतत्क्रमयोर्नास्ति वस्तु-समाहार इति । बुद्धिसमाहारो मुहूर्ताहोरात्रादयः । स खल्वयं कालो वस्तुशून्योऽपि बुद्धिनिर्माणः शब्दज्ञानानुपाती लौकि-कानां व्युत्थितदर्शनानां वस्तुस्वरूप इवावभासते । क्षणस्तु

त्कचित्सयमात्सर्वज्ञता सा च न निःशेषज्ञता । अपितु प्रकारमात्रविवक्षया यथा सर्वे व्यञ्जनैर्भुक्तमिति । अत्रहि यावन्तो व्यञ्जनप्रकारास्तैर्भुक्तमितिगम्यते नतु निःशे-षैरिति । अस्ति च निःशेषवचनः सर्वशब्दो यथोपनीतमत्र सर्वमशितं ब्राह्मणे-नेति । तत्रहि निःशेषमितिगम्यते ॥ ५० ॥

तदिह निःशेषज्ञताल्क्षणस्य विवेकजज्ञानस्य साधनं संयममाह । क्षणत-त्क्रमयोः सयमाद्विवेकजं ज्ञानम् । क्षणपदार्थं निदर्शनपूर्वकमाह । यथेति । लोष्टस्य हि प्रविभज्यमानस्य यस्मिन्नवयवेऽल्पतरतारतम्य व्यवतिष्ठते सोऽप-कर्षपर्यन्तः परमाणुर्यथातथापकर्षपर्यन्तः कालः क्षणः पूर्वापरभागविकलकाल-कलेतियावत् । तमेव क्षणं प्रकारान्तरेण दर्शयति । यावता वेति । परमाणुमात्रं देशमतिक्रामेदित्यर्थः । क्रमपदार्थमाह । तत्प्रवाहेति । तत्पदेन क्षणः परामृश्यते । नचेदृशः क्रमो वास्तवः किंतु काल्पनिकस्तस्य समाहाररूपस्या युगपदुपस्थितेषु वास्तवत्वेन विचारासहत्वादित्याह । क्षणतत्क्रमयोरिति । अयु-गपद्भाविक्षणधर्मत्वात्क्रमस्य क्षणसमाहारस्यावास्तवत्वात्क्षणतत्क्रमयोरप्यवास्तवत्व समाहारस्य नैसर्गिकवैतण्डिकबुद्ध्यतिशयरहिता लौकिकाः प्रतिक्षण एव व्युत्थि-तदर्शना भ्रान्ता ये कालमीदृशं वास्तवमभिमन्यन्त इति । तत्किं क्षणोऽप्यवा-स्तवो नेत्याह । क्षणस्तु वस्तुपतितो वास्तव इत्यर्थः । क्रमस्यावलम्बनमवलम्बः सोऽस्यास्तीतिक्रमेणावलम्ब्यते वैकल्पिकेनेत्यर्थः । क्रमस्य क्षणावलम्बनत्वे हेतुमाह ।

मुत्तरमिति । यदा तु पूर्वमामलकमन्यव्यग्रस्य ज्ञातुरुत्तरे देश उपावर्तते तदा तुल्यदेशत्वे पूर्वमेतदुत्तरमेतदितिप्रविभागानुपपत्तिः । असन्दिग्धेन च तत्त्वज्ञानेन भवितव्यमित्यत इदमुक्तम् । ततः प्रतिपत्तिर्विवेकजज्ञानादिति । कथं पूर्वामलकसहक्षणो देश उत्तरामलकसहक्षणाद्देशाद्भिन्नः । ते चामलके स्वदेशक्षणानुभवभिन्ने । अन्यदेशक्षणानुभवस्तु तयोरन्यत्वे हेतुरिति । एतेन दृष्टान्तेन परमाणोस्तुल्यजातिक्षणदेशस्य पूर्वपरमाणुदेशसहक्षणसाक्षात्करणादुत्तरस्य परमाणोस्तद्देशात्तद्देशानुपपत्तावुत्तरस्य तद्देशानुभवो भिन्नः सहक्षणभेदात्तयोरीश्वरस्य योगिनोऽन्यत्वप्रत्ययो भवतीति । अपरे तु वर्णयन्ति । येऽन्त्या विशेषास्तेऽन्यताप्रत्ययं

---

ज्ञान जिज्ञासुना केनचित्पूर्वामलकमन्यव्यग्रस्य योगिनो ज्ञातुरुत्तरदेशे उपावर्त्यत उत्तरदेशमामलक ततोऽपसार्य पिधाय वा तदा तुल्यदेशत्वे पूर्वमेतदुत्तरमेतदितिप्रविभागानुपपत्तिः प्राज्ञस्य लौकिकस्य निप्रमाणिनिपुणस्यासदिग्धेन च तत्त्वज्ञानेन भवितव्य विवेकजज्ञानवतो योगिनः सदिग्धत्वानुपपत्तेः । अत उक्त सूत्रकृता ततः प्रतिपत्तिः । तत इतिव्याचष्टे । विवेकजज्ञानादिति । क्षणतत्क्रमसयमाज्जात ज्ञानं कथमामलकं तुल्यजातिलक्षणदेशादामलकान्तराद्विवेचयतीतिपृच्छति । कथमिति । उत्तरमाह । पूर्वामलकसहक्षणो देशः पूर्वामलकेनैकक्षणो देशस्तेन सह निरन्तरः परिणाम इतियावत् । उत्तरामलकसहक्षणाद्देशादुत्तरामलकनिरन्तरपरिणामाद्भिन्नो भवतु देशयोर्भेदः किमायातमामलकभेदस्येत्यत आह । ते चामलके स्वदेशक्षणानुभवभिन्ने स्वदेशसहितो यः क्षणस्तस्यामलकस्य कालकला स्वदेशेन सहौत्तराधर्यरूपपरिणामलक्षिता सा । स्वदेशक्षणस्तस्यानुभवः प्राप्तिर्वा ज्ञान वा तेन भिन्ने आमलके ययोरामलकयोः पूर्वोत्तराभ्यां देशाभ्यामौत्तराधर्यपरिणामक्षण आसीत्तयोर्देशान्तरगोत्तराधर्यपरिणामक्षणविशिष्टत्वमनुभवन्त्ययमी ते भिन्ने एव प्रत्येति । सम्प्रति तद्देशपरिणामेऽपि पूर्वभिन्नदेशपरिणामाद्विशिष्टस्य चैतद्देशपरिणामक्षणस्य सयमतः साक्षात्करणात्तदिदमुक्तमन्यदेशक्षणानुभवस्तु तयोरन्यत्वे हेतुरिति । अनेनैव निदर्शनेन लौकिकपरीक्षकसवादादिना परमाणोरपीदृशस्य भेदो योगीश्वरबुद्धिगम्यः श्रद्धेय इत्याह । एतेनेति । अपरे तु वर्णयन्ति । वर्णनमुदाहरति । य इति । वैशेषिका हि नित्यद्रव्यवृत्तयो-

## जातिलक्षणदेशैरन्यतानवच्छेदात्तुल्ययोस्ततः प्रतिपत्तिः ॥ ५२ ॥

वस्तुपतितः क्रमावलम्बी । क्रमश्च क्षणानन्तर्यात्मा तं कालविदः काल इत्याचक्षते योगिनः । नच द्वौ क्षणौ सह भवतः । क्रमश्च न द्वयोः सहभुवोरसंभवात्पूर्वस्मादुत्तरस्य भाविनो यदानन्तर्यं क्षणस्य स क्रमस्तस्माद्वर्तमान एवैकः क्षणो न पूर्वोत्तरक्षणाः सन्तीति तस्मान्नास्ति तत्समाहारः । ये तु भूतभाविनः क्षणास्ते परिणामान्विता व्याख्येयास्तेनैकेन क्षणेन कृत्स्नो लोकः परिणाममनुभवति तत्क्षणोपारूढाः खल्वमी सर्वे धर्मास्तयोः क्षणतत्क्रमयोः संयमात्तयोः साक्षात्करणं ततश्च विवेकजं ज्ञानं प्रादुर्भवति ॥ ५१ ॥

तस्य विषयविशेष उपक्षिप्यते । जातिलक्षणदेशैरन्यतानवच्छेदात्तुल्ययोस्ततः प्रतिपत्तिः । तुल्ययोर्देशलक्षणसारूप्ये जातिभेदोऽन्यतायां हेतुः । गौरियं वडवेयमिति । तुल्यदेशजातीयत्वे लक्षणमन्यत्वकरं कालाक्षी गौः । स्वस्तिमती गौरिति । द्वयोरामलकयोर्जातिलक्षणसारूप्याद्देशभेदोऽन्यत्वकर इदं पूर्वमिद-

---

क्रमश्चेति । क्रमस्यावास्तवत्वे हेतुमाह । नचेति । चो हेत्वर्थे । यस्तु वैजात्यात्त्वहभावमुपेयात्तं मत्वाह । क्रमश्च न द्वयोरिति । कस्मादसंभव इत्यत आह । पूर्वस्मादिति । उपसंहरति । तस्मादिति । तत्किमिदानीं शशविषाणायमाना एव पूर्वोत्तरक्षणा नेत्याह । ये त्विति । अन्विताः साम्येन समन्वागता इत्यर्थः । उपसंहरति । तेनेति । वर्तमानस्यैवार्थक्रियासु स्वोचितासु सामर्थ्यादिति ॥ ५१ ॥

यद्यप्येतद्विवेकजं ज्ञानं निःशेषभावविषयमित्यग्रे वक्ष्यते तथाप्यतिसूक्ष्मत्वात्प्रथमं तस्य विषयविशेष उपक्षिप्यते । जातिलक्षणदेशैरन्यतानवच्छेदात्तुल्ययोस्ततः प्रतिपत्तिः । लौकिकानां जातिभेदोऽन्यताया ज्ञापकहेतुः । तुल्या जातिर्गोत्वं तुल्यश्च देशः पूर्वत्वादिः । कालाक्षीस्वस्तिमत्योर्लक्षणभेदः परमिति द्वयोरामलकयोस्तुल्या आमलकत्वजातिर्वर्तुलत्वादिलक्षणं तुल्यं देशभेदः परमिति । यदा तु योगि-

## सत्त्वपुरुषयोः शुद्धिसाम्ये कैवल्यम् ॥ ५४ ॥

किंचिदविपयीभूतमित्यर्थः । सर्वथाविषयमतीतानागतप्रत्युत्पन्नं सर्वं पर्यायैः सर्वथा जानातीत्यर्थः । अक्रममित्येकक्षणोपारूढं सर्वं सर्वथा गृह्णातीत्यर्थः । एतद्विवेकजं ज्ञानं परिपूर्णमस्यैवांशो योगप्रदीपो मधुमतीं भूमिमुपादाय यावदस्य परिसमाप्तिरिति ॥ ५३ ॥

प्राप्तविवेकजज्ञानस्याप्राप्तविवेकजज्ञानस्य वा । सत्त्वपुरुषयोः शुद्धिसाम्ये कैवल्यमिति । यदा निर्धूतरजस्तमोमलं बुद्धिसत्त्वं पुरुषस्यान्यताप्रतीतिमात्राधिकारं दग्धक्लेशबीजं भवति तदा पुरुषस्य शुद्धिसारूप्यमिवापन्नं भवति तदा पुरुषस्योपचरितभोगाभावः शुद्धिस्तस्यामवस्थायां कैवल्यं भवति । ईश्वरस्यानीश्वरस्य वा विवेकजज्ञानभागिन इतरस्य वा । नहि दग्धक्लेशबीजस्य ज्ञाने पुनरपेक्षा काचिदस्ति सत्त्वशुद्धिद्वारेणैतत्समाधिजमैश्वर्यं ज्ञानं चोपक्रान्तं परमार्थतस्तु ज्ञानाददर्शनं निवर्तते तस्मिन्निवृत्ते न

---

वांशो योगप्रदीपः संप्रज्ञातः । किमुपक्रमः किमवसानश्चासावित्याह । मधुमतीमिति । ऋतम्भराप्रज्ञैव मधु मोदकारणत्वात् । यथोक्तंप्रज्ञाप्रसादमारुह्येति । तद्वती मधुमती मधुप्रदा यां धियोऽवस्थामुपादाय यावदवस्थापरिसमाप्तिः सप्तधा प्रान्तभूमिः प्रज्ञा अत एव विवेकजं ज्ञानं तारकं भवति । तदंशस्य योगप्रदीपस्य तारकत्वादिति ॥ ५३ ॥

तदेवं परम्परया कैवल्यस्य हेतूनसविभूतीन्संयमानुक्त्वा सत्त्वपुरुषान्यताज्ञान साक्षात्कैवल्यसाधनमित्यत्र सूत्रमवतारयति । प्राप्तेति । विवेकजं ज्ञानं भवतु मा वा भूत्सत्त्वपुरुषान्यताख्यातिस्तु कैवल्यप्रयोजिकेत्यर्थः । सत्त्वपुरुषयोः शुद्धिसाम्ये कैवल्यमिति । इतिः सूत्रसमाप्तौ । ईश्वरस्य पूर्वोक्तैः संयमैः ज्ञानक्रियाशक्तिमतोऽनीश्वरस्य वा समनन्तरोक्तेन संयमेन विवेकजज्ञानभागिन इतरस्य वा उत्पन्नज्ञानस्य न विभूतिषु काचिदपेक्षास्तीत्याह । नहीति । ननु यद्यनपेक्षिता विभूतयः कैवल्ये व्यर्थस्तर्हि तासामुपदेश इत्यत आह। सत्त्वशुद्धिद्वारेणेति। इत्थभूतलक्षणे

**तदा विवेकनिम्नं कैवल्यप्राग्भारं चित्तम् ॥ २६ ॥**

**तच्छिद्रेषु प्रत्ययान्तराणि संस्कारेभ्यः ॥ २७ ॥**

**हानमेषां क्लेशवदुक्तम् ॥ २८ ॥**

तदा विवेकनिम्नं कैवल्यप्राग्भारं चित्तम् । तदानीं यदस्य चित्तं विषयप्राग्भारमज्ञाननिम्नमासीत्तदस्यान्यथा भवति कैवल्यप्राग्भारं विवेकजज्ञाननिम्नमिति ॥ २६ ॥

तच्छिद्रेषु प्रत्ययान्तराणि संस्कारेभ्यः । प्रत्ययविवेकनिम्नस्य सत्त्वपुरुषान्यताख्यातिमात्रप्रवाहारोहिणश्चित्तस्य तच्छिद्रेषु प्रत्ययान्तराण्यस्मीति वा ममेति वा जानामीति वा कुतः क्षीयमाणबीजेभ्यः पूर्वसंस्कारेभ्य इति ॥ २७ ॥

हानमेषां क्लेशवदुक्तम् । यथा क्लेशा दग्धबीजभावा न प्ररोहसमर्था भवन्ति तथा ज्ञानाग्निना दग्धबीजभावः पूर्वसंस्कारो

---

अथ विशेषदर्शिनः कीदृश चित्तमित्यत आह । तदा विवेकनिम्नं कैवल्यप्राग्भारं चित्तम् । निगदव्याख्यातम् ॥ २६ ॥

स्यादेतद्विशेषदर्शिन चेद्विवेकनिष्ठम् । न जातु चित्तं व्युत्थितं स्यात् । दृश्यते चास्य भिक्षामटतो व्युत्थितमित्यत आह । तच्छिद्रेषु प्रत्ययान्तराणि संस्कारेभ्यः । प्रत्ययेति । प्रतीयते येन स प्रत्ययश्चित्तसत्त्व तस्माद्विवेकश्चितेः । तेन निम्नस्य जानामीतिसाक्षान्मोक्षे विविच्य दर्शिते न जानामीति मोहस्तन्मूलावहङ्कारममकारावहमस्मीति वा ममेति वा दर्शितौ । क्षीयमाणानि च तानि बीजानि चेतिसमासः । पूर्वसंस्कारेभ्यो व्युत्थानसंस्कारेभ्यः ॥ २७ ॥

स्यादेतत्सत्यपि विवेकविज्ञाने व्युत्थानसंस्कारा यदि प्रत्ययान्तराणि प्रसुवते । कस्तर्हि हानहेतुरेतेषां यतः प्रत्ययान्तराणि न पुनः प्रसुवीरन्नित्यत आह । हानमेषां क्लेशवदुक्तम् । अपरिपक्वविवेकज्ञानस्याक्षीयमाणा व्युत्थानसंस्काराः प्रत्ययान्तरं प्रसुवते । नतु परिपक्वविवेकज्ञानस्य क्षीणाः प्रत्ययान्तराणि प्रसोतुमर्हन्ति । यथा विवेकच्छिद्रसमुत्पन्ना अपि क्लेशा न संस्कारान्तरं प्रसुवते तत्कस्य हेतोस्तदेते क्लेशा विवेकज्ञानवह्निदग्धबीजभावा इति । एवं व्युत्थानसंस्कारा अपीति । अथ व्युत्थानसंस्कारा विवेकज्ञानसंस्कारैर्निरोद्धव्या विवेकसंस्काराश्च

## प्रसङ्ख्यानेऽप्यकुसीदस्य सर्वथा विवेकख्यातेर्धर्ममेघः समाधिः ॥ २९ ॥

## ततः क्लेशकर्मनिवृत्तिः ॥ ३० ॥

न प्रत्ययप्रसूर्भवति । ज्ञानसंस्कारास्तु चित्ताधिकारिसमाप्तिमनुशेरत इति न चिन्त्यन्ते ॥ २८ ॥

प्रसङ्ख्यानेऽप्यकुसीदस्य सर्वथा विवेकख्यातेर्धर्ममेघः समाधिः॥ यदायं ब्राह्मणः प्रसङ्ख्यानेऽप्यकुसीदस्ततोऽपि न किंचित्प्रार्थयते तत्रापि विरक्तस्य सर्वथा विवेकख्यातिरेव भवतीति संस्कारबीजक्षयान्नास्य प्रत्ययान्तराण्युत्पद्यन्ते तदास्य धर्ममेघो नाम समाधिर्भवति ॥ २९ ॥

ततः क्लेशकर्मनिवृत्तिः । तल्लाभादविद्यादयः क्लेशाः समूलकाषं कषिता भवन्ति । कुशलाकुशलाश्च कर्माशयाः समूलघातं हता भवन्ति । क्लेशकर्मनिवृत्तौ जीवन्नेव विद्वान्विमुक्तो भवति ।

---

निरोधसंस्कारैर्निरोधसंस्काराणां स्वकार्यविषयत्वं दर्शितं निरोधोपायः प्रत्ययश्चिन्तनीय इत्यत आह । ज्ञानसंस्कारास्त्विति । परवैराग्यसंस्कारा इत्यर्थः ॥ २८ ॥

तदेवं सूत्रकारो व्युत्थाननिरोधोपायं प्रसङ्ख्यानमुक्त्वा प्रसङ्ख्याननिरोधोपायमाह । प्रसङ्ख्यानेऽप्यकुसीदस्य सर्वथा विवेकख्यातेर्धर्ममेघः समाधिः । ततः प्रसङ्ख्यानान्न किंचित्सर्वभावाधिष्ठातृत्वादि प्रार्थयते । प्रत्युत तत्रापि विरज्यते । परिणामित्वदोषदर्शनेन विरक्तः सर्वथा विवेकख्यातिरेव भवति । एतदेव विवृणोति । तत्रापीति । यदा व्युत्थानप्रत्यया न भवेयुस्तदा नायं ब्राह्मणः सर्वथा विवेकख्यातिर्यतस्तस्य न प्रत्ययान्तराणि भवन्ति ततः सर्वथा विवेकख्यातिरिति । तदास्य धर्ममेघः समाधिर्भवति । एतदुक्तं भवति । प्रसङ्ख्याने विरक्तस्तन्निरोधमिच्छन्धर्ममेघं समाधिमुपासीत । तदुपासने च सर्वथा विवेकख्यातिर्भवति ॥ २९ ॥

तथा च तं निरोद्धुं पारयतीति । तस्य च प्रयोजनमाह । ततः क्लेशकर्मनिवृत्तिः । यस्मात्पुनर्जीवन्नेव विद्वान्विमुक्तो भवति । उत्तरं यस्मादिति । क्लेश-

## तदा सर्वावरणमलापेतस्य ज्ञानस्यानन्त्याज्ज्ञेयमल्पम् ॥ ३१ ॥

कस्मात्। यस्माद्विपर्ययो भवस्य कारणम्। नहि क्षीणक्लेशविपर्ययः कश्चित्केनचित्कचिज्जातो दृश्यत इति ॥ ३० ॥

तदा सर्वावरणमलापेतस्य ज्ञानस्यानन्त्याज्ज्ञेयमल्पम् । सर्वैः क्लेशकर्मावरणैर्विमुक्तस्य ज्ञानस्यानन्त्यं भवति । तमसाभिभूतमावृतमनन्तं ज्ञानसत्त्वं क्वचिदेव रजसा प्रवर्तितमुद्घाटितं ग्रहणसमर्थं भवति । तत्र यदा सर्वैरावरणमलैरपगतं भवति तदा भवत्यस्यानन्त्यम् । ज्ञानस्यानन्त्याज्ज्ञेयमल्पं सम्पद्यते । यथाकाशे खद्योतः । यत्रेदमुक्तम् । अन्धो मणिमविध्यत्तमनङ्गुलिरावयत् । अग्रीवस्तं प्रत्यमुञ्चत्तमजिह्वोऽभ्यपूजयदिति ॥ ३१ ॥

---

धर्मवासनेद्धः किल कर्माशयो जात्यादिनिदानम् । न चासति निदाने निदानी भवितुमर्हति । यथाहाम भगवानक्षपादः। वीतरागजन्मादर्शनादिति ॥ ३० ॥

अथैव धर्ममेघे सति कीदृश चित्तमित्यत आह । तदा सर्वावरणमलापेतस्य ज्ञानस्यानन्त्याज्ज्ञेयमल्पम् । आव्रियते चित्तसत्त्वमेभिरित्यावरणानि मलाः क्लेशकर्माणि सर्वे च ते आवरणमलाश्चेति सर्वावरणमलाः तेभ्योऽपेतस्य चित्तसत्त्वस्य ज्ञानस्य ज्ञायतेऽनेनेत्यनया व्युत्पत्त्या आनन्त्यादपरिमेयत्वाज्ज्ञेयमल्पम् । यथा हि शरदि घनपटलमुक्तस्य चण्डार्चिषः परितः प्रद्योतमानस्य प्रकाशानन्त्यादवकाश्या घटादयोऽल्पाः प्रकाशन्ते । एवमपगतरजस्तमसश्चित्तसत्त्वस्य प्रकाशानन्त्यादल्प प्रकाश्यमिति । तदेतदाह । सर्वैरिति । एतदेव व्यतिरेकमुखेन स्फोरयति । आवरकेण तमसाभिभूतमिति । क्रियाशीलेन रजसा प्रवर्तितमत एवोद्घाटित प्रदेशादपनीत तम इत्यर्थः । अत एव सर्वान्धर्मान् ज्ञेयान्मेहति वर्षति प्रकाशनेनेति धर्ममेघ इत्युच्यते । नन्वयमस्तु धर्ममेघः समाधिः सवासनक्लेशकर्माशयप्रशमहेतुः । अथ सत्यप्यस्मिन्कस्मान्न जायते पुनर्जन्तुरित्यत आह । यत्रेदमुक्तमिति । कारणसमुच्छेदादपि चेत्कार्यं क्रियते हन्त भो मणिवेधादयोऽन्धादिभ्यो भवेयुः प्रत्यक्षाः । तथा चानुपपन्नार्थतायामाभाणकं लौकिक उपपन्नार्थं स्यात् । अन्धो मणिमविध्यत् । आयथमधिगतान् । प्रत्यमुञ्चदिनङ्गुलावनभ्यपूजयत्मुनचानिति ॥ ३१ ॥

**ततः कृतार्थानां परिणामक्रमसमाप्तिर्गुणानाम् ॥३२॥**

**क्षणप्रतियोगी परिणामापरान्तनिर्ग्राह्यः क्रमः ॥३३॥**

ततः कृतार्थानां परिणामक्रमसमाप्तिर्गुणानाम् । तस्य धर्ममेघस्योदयात्कृतार्थानां गुणानां परिणामक्रमः परिसमाप्यते । नहि कृतभोगापवर्गाः परिसमाप्तक्रमाः क्षणमप्यवस्थातुमुत्सहन्ते ॥ ३२ ॥

अथ कोऽयं क्रमो नामेति । क्षणप्रतियोगी परिणामापरान्तनिर्ग्राह्यः क्रमः । क्षणानन्तर्यात्मा परिणामस्यापरान्तेनावसनेन गृह्यते क्रमः । नह्यननुभूतक्रमक्षणा नवपुराणता वस्त्रस्यान्ते भवति । नित्येषु च क्रमो दृष्टः । द्वयी चेयं नित्यता कूटस्थनित्यता परिणामिनि-

---

ननु धर्ममेघस्य पराकाष्ठा ज्ञानप्रसादमात्रं परं वैराग्यं समूलघातमपहन्तु व्युत्थानसमाधिसंस्कारान्सक्लेशकर्माशयान्गुणास्तु स्वत एव विकारकरणशीलाः कस्मात्ताहशमपि पुरुषं प्रति देहेन्द्रियादीन्नारभन्त इत्यत आह । ततः कृतार्थानां परिणामक्रमसमाप्तिर्गुणानाम् । शीलमिदं गुणानां यदमी यं प्रतिकृतार्थास्तं प्रति न प्रवर्तन्त इतिभावः ॥ ३२ ॥

अत्रान्तरे परिणामक्रमं पृच्छति । अथ कोऽयमिति । क्षणप्रतियोगी परिणामापरान्तनिर्ग्राह्यः क्रमः । परिणामक्रमक्षणप्रतियोगीक्षणः प्रतिसम्बन्धी यस्य स तथोक्तः । क्षणप्रचयाश्रय इत्यर्थः । न जातु क्रमः क्रमवन्तमन्तरेण शक्यो निरूपयितुम् । न चैकस्यैव क्षणस्य क्रमः तस्मात्क्षणप्रचयाश्रयः परिशिष्यते । तदिदमाह । क्षणानन्तर्येति । परिणामक्रमे प्रमाणमाह । परिणामस्येति । नवस्य हि वस्त्रस्य प्रयत्नसंरक्षितस्यापि चिरेण पुराणता दृश्यते सोऽयं परिणामस्यापरान्तः पर्यवसानं तेन हि परिणामस्य क्रमः । तत प्रागपि पुराणतायाः सूक्ष्मसूक्ष्मतरसूक्ष्मतमस्थूलस्थूलतरस्थूलतमत्वादीनां पौर्वापर्यमनुमीयते । एतदेव व्यतिरेकमुखेन दर्शयति । नहीति । अननुभूतोऽप्राप्तः क्रमक्षणो यया सा तथोक्ता । नन्वेवं क्रमः प्रधानस्य न सम्भवति तस्य नित्यत्वादित्यत आह । नित्येषु चेति । बहुवचनेन सर्वनित्यव्यापिता क्रमस्य प्रतिजानीते । तत्र नित्यानां प्रकारभेदं दर्शयित्वा नित्यव्यापिता क्रमस्योपपादयति । द्वयीति । ननु कूटस्थ स्वभावादप्रच्युतमस्तु नित्यं यदि परिणामि सदैव स्वरूपाद्व्यवमानं

त्यता च । तत्र कूटस्थनित्यता पुरुषस्य । परिणामिनित्यता गुणानाम् । यस्मिन्परिणममाने तत्त्वं न विहन्यते तन्नित्यम् । उभयस्य च तत्त्वानभिघातान्नित्यत्वं तत्र गुणधर्मेषु बुद्ध्यादिषु परिणामापरान्तनिर्ग्राह्यः क्रमो लब्धपर्यवसानो नित्येषु धर्मिषु गुणेष्वलब्धपर्यवसानः । कूटस्थनित्येषु स्वरूपमात्रप्रतिष्ठेषु मुक्तपुरुषेषु स्वरूपास्तिता क्रमेणैवानुभूयत इति तत्राप्यलब्धपर्यवसानः शब्दपृष्ठेन अस्तिक्रियामुपादाय कल्प्यत इति । अथास्य संसारस्य स्थित्या गत्या च गुणेषु वर्तमानस्यास्ति क्रमसमाप्तिर्न वेति । अवचनीयमेतत् । कथम् । अस्ति प्रश्न एकान्तवचनीयः सर्वो जातो मरिष्यति मृत्वा जनिष्यत इति । ॐ भो इत्यथ सर्वो जातो मरिष्यतीति

---

कथं नित्यमित्यत आह । यस्मिन्निति । धर्मलक्षणावस्थानामुदयव्ययधर्मत्वे धर्मिणस्तु तत्त्वादविघात एवेति । अथ किं परिणामापरान्तनिर्ग्राह्यता सर्वक्रमस्य नेत्याह । तत्र गुणधर्मेषु बुद्ध्यादिष्विति । यतो लब्धपर्यवसानो धर्माणां विनाशात्प्रधानस्य तु परिणामक्रमो न लब्धपर्यवसानः । ननु प्रधानस्य धर्मरूपेण परिणामादस्तु परिणामक्रमः । पुरुषस्य त्वपरिणामिनः कुतः परिणामक्रम इत्यत आह । कूटस्थेति । तत्र बद्धानां चित्ताव्यतिरेकाभिमानात्तत्परिणामेन परिणामाध्यासः । मुक्तानां चास्तिक्रियामुपादायावास्तवोऽपि परिणामो मोहकल्पितः । शब्दस्य पुरःसरतया तत्पृष्ठो विकल्पोऽस्तिक्रियामुपादत्त इतिगुणेष्वलब्धपर्यवसानः परिणामक्रम इत्युक्तम् । तदसहमानः पृच्छति । अथेति ।

• स्थित्येति महाप्रलयावस्थायाम् । गत्येति सृष्टौ । एतदुक्तं भवति । यद्यानन्त्यान्न परिणामसमाप्तिः संसारस्य हन्त भोः कथं महाप्रलयसमये सर्वेषामात्मना सहसा समुच्छिद्येत कथं च सृष्ट्यादौ सहसोत्पद्येत संसारस्तस्मादेकैकस्यात्मनो मुक्तिक्रमेण सर्वेषां विमोक्षादुच्छेदः सर्वेषां संसारस्य । क्रमेणेतिप्रधानपरिणामक्रमपरिसमाप्तिः । एवं च प्रधानस्याप्यनित्यत्वप्रसङ्गः । न चापूर्वसत्त्वप्रादुर्भाव इष्यते येनानन्त्यं स्यात् । तथा सत्यनादित्वव्याहतेस्सकलशास्त्रार्थभङ्गप्रसङ्ग इतिभावः । उत्तरमाह । अवचनीयमनुत्तराहमेतदेकान्तत एतस्यावचनीयतां दर्शयितुमेकान्तवचनीयं प्रश्नं दर्शयति । अस्ति प्रश्न इति । सर्वो जातो मरिष्यतीति प्रश्नोत्तरं ॐ भो इति स सत्यं भो इत्यर्थः । अविभज्य वचनीयमुक्त्वा प्रविभज्यवचनीयं प्रश्नमाह । अथ सर्व इति । विभज्य वचनीयतामाह ।

## पुरुषार्थशून्यानां गुणानां प्रतिप्रसवः कैवल्यं स्वरूपप्रतिष्ठा वा चितिशक्तिरिति ॥ ३४ ॥

मृत्वा जनिष्यत इति विभज्यवचनीयमेतत्प्रत्युदितख्यातिः क्षीणतृष्णः कुशलो न जनिष्यत इतरस्तु जनिष्यते । तथा मनुष्यजातिः श्रेयसी न वा श्रेयसीत्येवं परिपृष्टे विभज्य वचनीयः प्रश्नः पशूनधिकृत्य श्रेयसी देवानृषींश्चाधिकृत्य नेति । अयं त्ववचनीयः प्रश्नः संसारोऽयमन्तवाननन्तवान्वाथानन्त इति । कुशलस्यास्ति संसारक्रमपरिसमाप्तिर्नेतरस्येति । अन्यतरावधारणे दोषस्तस्माद्व्याकरणीय एवायं प्रश्न इति ॥ ३३ ॥

गुणाधिकारक्रमपरिसमाप्तौ कैवल्यमुक्तं तत्स्वरूपमवधार्यते । पुरुषार्थशून्यानां गुणानां प्रतिप्रसवः कैवल्यं स्वरूपप्रतिष्ठा वा

---

विभज्येति । विभज्य वचनीयमेव प्रश्नान्तरं विस्पष्टार्थमाह । तथा मनुष्येति । अयं त्ववचनीय एकान्ततः । नहि सामान्येन कुशलाकुशलपुरुषसंसारस्यान्तवत्त्वमनन्तवत्त्वं वा शक्यमेकान्ततो वक्तुम् । यथा प्राणभृन्मात्रस्य श्रेयस्त्वमश्रेयस्त्वं चानेकान्ततः शक्यमवधारयितुम् । यथा जातमात्रस्य मरणमेकान्ततो विभज्य पुनः शक्यावधारणमित्याह । कुशलस्येति । अयमभिसन्धिः । क्रमेण मोक्षे सर्वेषां मोक्षात्संसारोच्छेद इत्यनुमानं तथागमसिद्धमोक्षाश्रयं तथाचाभ्युपगतमोक्षप्रतिपादकागमप्रमाणभावः । कथं तमेवागमं प्रधानविकारनित्यतायाम् प्रमाणीकुर्यात्तस्मादागमबाधितविषयमेतदनुमानं न प्रमाणम् । श्रूयते हि श्रुतिस्मृतीतिहासपुराणेषु सर्गप्रतिसर्गपरम्पराया अनादित्वमनन्तत्वं चेति । अपि च सर्वेषामेवात्मना संसारस्य न तावद्युगपदुच्छेदः सम्भवी । नहि पण्डितरूपाणामप्यनेकजन्मपरम्पराभ्यासपरिश्रमसाध्यविवेकख्यातिप्रतिष्ठा । किं पुनः प्राणभृन्मात्रस्य स्थावरजङ्गमादेरेकदाऽकस्मादर्हनुमर्हति । न च कारणायौगपद्ये कार्ययौगपद्यं युज्यते । क्रमेण तु निःश्रेयसातावदसंख्येयानां क्रमेण मुक्तौ न संसारोच्छेदोऽनन्तत्वाज्जन्तूनामसंख्येयत्वादिति सर्वमवदातम् ॥ ३३ ॥

कैवल्यस्वरूपावधारणपरस्य सूत्रस्यावान्तरसङ्गतिमाह । गुणाधिकारेति । पुरुषार्थशून्यानां गुणानां प्रतिप्रसवः कैवल्यं स्वरूपप्रतिष्ठा वा चितिशक्तिरिति । कृतकार्यतया पुरुषार्थशून्यानां यः प्रतिप्रसवः स्वकारणे प्रधाने लयस्तेषां कार्य-

चितिशक्तिरिति । कृतभोगापवर्गाणां पुरुषार्थशून्यानां यः प्रतिप्रसवः कार्यकारणात्मकानां गुणानां तत्कैवल्यं स्वरूपप्रतिष्ठा पुनर्बुद्धिसत्त्वानभिसम्बन्धात्पुरुषस्य चितिशक्तिरेव केवला तस्याः सदा तथैवावस्थानं कैवल्यमिति ॥ ३४ ॥

इति श्रीपातञ्जले योगशास्त्रे साङ्ख्यप्रवचने
कैवल्यपादश्चतुर्थः सम्पूर्णः

समाप्तश्चायं ग्रन्थः

---

कारणात्मनां गुणानां व्युत्थानसमाधिनिरोधसंस्कारा मनसि प्रलीयन्ते मनोऽस्मितायामस्मिता लिङ्गे लिङ्गमलिङ्ग इति । योऽयं गुणानां कार्यकारणात्मकानां प्रतिसर्गः तत्कैवल्यम् । यं कञ्चित्पुरुषं प्रति प्रधानस्य मोक्षः स्वरूपप्रतिष्ठा वा पुरुषस्य मोक्ष इत्याह । स्वरूपेति । अस्ति हि महाप्रलयेऽपि स्वरूपप्रतिष्ठा-चितिशक्तिः । न चासौ मोक्ष इत्यत आह । पुनरिति । सोऽयमितिशब्दः शास्त्रपरिसमाप्तौ ॥ ३४ ॥

मुक्त्यर्हचित्तं परलोकमेयप्रसिद्धये धर्मधनः समाधिः ।
द्वयी च मुक्तिः प्रतिपादितास्मिन्पादे प्रसङ्गादपि चान्यदुक्तम् ।

निदान तापानामुदितमथ तापाश्च कथिताः
सहाङ्गैरष्टाभिर्विहितमिह योगद्वयमपि ।
कृतो मुक्तेरध्वा गुणपुरुषभेदः स्फुटतरो
विविक्तं कैवल्यं परिगलिततापाचितिरसौ ॥

इति श्रीमद्वाचस्पतिमिश्रविरचितायां पातञ्जलभाष्यव्याख्यायां कैवल्यपादश्चतुर्थः समाप्तः ॥ ४ ॥

ॐ तत्सद्ब्रह्मार्पणमस्तु ॥

श्रीः

# योगसूत्रपाठः ।

ॐम् । अथ योगानुशासनम् ॥ १ ॥ योगश्चित्तवृत्तिनिरोधः ॥ २ ॥ तदा द्रष्टुः स्वरूपेऽवस्थानम् ॥ ३ ॥ वृत्तिसारूप्यमितरत्र ॥ ४ ॥ वृत्तयः पञ्चतय्यः क्लिष्टाक्लिष्टाः ॥ ५ ॥ प्रमाणविपर्ययविकल्पनिद्रास्मृतयः ॥ ६ ॥ प्रत्यक्षानुमानागमाः प्रमाणानि ॥ ७ ॥ विपर्ययो मिथ्याज्ञानमतद्रूपप्रतिष्ठम् ॥ ८ ॥ शब्दज्ञानानुपाती वस्तुशून्यो विकल्पः ॥ ९ ॥ अभावप्रत्ययालम्बना वृत्तिर्निद्रा ॥ १० ॥ अनुभूतविषयासंप्रमोषः स्मृतिः ॥ ११ ॥ अभ्यासवैराग्याभ्यां तन्निरोधः ॥ १२ ॥ तत्रस्थितौ यत्नोऽभ्यासः ॥ १३ ॥ सतु दीर्घकालनैरन्तर्यसत्कारासेवितो दृढभूमिः ॥ १४ ॥ दृष्टानुश्रविकविषयवितृष्णस्य वशीकारसंज्ञा वैराग्यम् ॥ १५ ॥ तत्परं पुरुषख्यातेर्गुणवैतृष्ण्यम् ॥ १६ ॥ वितर्कविचारानन्दास्मितारूपानुगमात्संप्रज्ञातः ॥ १७ ॥ विरामप्रत्ययाभ्यासपूर्वः संस्कारशेषोऽन्यः ॥ १८ ॥ भवप्रत्ययो विदेहप्रकृतिलयानाम् ॥ १९ ॥ श्रद्धावीर्यस्मृतिसमाधिप्रज्ञापूर्वक इतरेषाम् ॥ २० ॥ तीव्रसंवेगानामासन्नः ॥ २१ ॥ मृदुमध्याधिमात्रत्वा-

त्ततोऽपि विशेषः ॥ २२ ॥ ईश्वरप्रणिधानाद्वा ॥ २३ ॥ क्लेशकर्मविपाकाशयैरपरामृष्टः पुरुषविशेष ईश्वरः ॥ २४ ॥ तत्र निरतिशयं सर्वज्ञबीजम् ॥ २५ ॥ स एष पूर्वेषामपि गुरुः कालेनानवच्छेदात् ॥२६॥ तस्य वाचकः प्रणवः ॥२७॥ तज्जपस्तदर्थभावनम् ॥२८॥ ततः प्रत्यक्चेतनाधिगमोऽप्यन्तरायाभावश्च ॥ २९॥ व्याधिस्त्यानसंशयप्रमादालस्याविरतिभ्रान्तिदर्शनालब्धभूमिकत्वानवस्थितत्वानि चित्तविक्षेपास्तेऽन्तरायाः ॥ ३० ॥ दुःखदौर्मनस्याङ्गमेजयत्वश्वासप्रश्वासा विक्षेपसहभुवः ॥ ३१ ॥ तत्प्रतिषेधार्थमेकतत्त्वाभ्यासः ॥ ३२ ॥ मैत्रीकरुणामुदितोपेक्षाणां सुखदुःखपुण्यापुण्यविषयाणां भावनातश्चित्तप्रसादनम् ॥ ३३ ॥ प्रच्छर्दनविधारणाभ्यां वा प्राणस्य ॥ ३४ ॥ विषयवती वा प्रवृत्तिरुत्पन्ना मनसः स्थितिनिबन्धिनी ॥ ३५ ॥ विशोका वा ज्योतिष्मती ॥ ३६ ॥ वीतरागविषयं वा चित्तम् ॥ ३७ ॥ स्वप्ननिद्राज्ञानालम्बनं वा ॥ ३८ ॥ यथाभिमतध्यानाद्वा ॥ ३९ ॥ परमाणुपरमहत्त्वान्तोऽस्य वशीकारः ॥ ४० ॥ क्षीणवृत्तेरभिजातस्येव मणेर्ग्रहीतृग्रहणग्राह्येषु तत्स्थतदञ्जनता समापत्तिः ॥ ४१ ॥ तत्र शब्दार्थज्ञानविकल्पैः सङ्कीर्णा सवितर्कासमापत्तिः

॥ ४२ ॥ स्मृतिपरिशुद्धौ स्वरूपशून्येवार्थमात्रनिर्भासा निर्वितर्का ॥ ४३ ॥ एतयैव सविचारा निर्विचारा च सूक्ष्मविषया व्याख्याता ॥ ४४ ॥ सूक्ष्मविषयत्वं चालिङ्गपर्यवसानम्॥ ४५॥ ता एव सबीजः समाधिः ॥ ४६ ॥ निर्विचारवैशारद्येऽध्यात्मप्रसादः ॥ ४७ ॥ ऋतंभरा तत्र प्रज्ञा ॥ ४८ ॥ श्रुतानुमानप्रज्ञाभ्यामन्यविषया विशेषार्थत्वात् ॥ ॥४९॥ तज्जः संस्कारोऽन्यसंस्कारप्रतिबन्धी ॥ ५०॥ तस्यापि निरोधे सर्वनिरोधान्निर्बीजः समाधिः॥५१॥

इति प्रथमः पादः समाप्तः ॥ १ ॥

---

तपःस्वाध्यायेश्वरप्रणिधानानि क्रियायोगः॥१॥ समाधिभावनार्थः क्लेशतनूकरणार्थश्च ॥ २ ॥ अविद्यास्मितारागद्वेषाभिनिवेशाः क्लेशाः ॥ ३ ॥ अविद्याक्षेत्रमुत्तरेषां प्रसुप्ततनुविच्छिन्नोदाराणाम्॥ ४॥ अनित्याशुचिदुःखानात्मसु नित्यशुचिसुखात्मख्यातिरविद्या ॥ ५ ॥ दृग्दर्शनशक्त्योरेकात्मतेवास्मिता ॥ ६ ॥ सुखानुशयी रागः ॥ ७ ॥ दुःखानुशयी द्वेषः ॥ ८ ॥ स्वरसवाही विदुषोऽपि तथारूढोऽभिनिवेशः ॥ ९ ॥ ते प्रतिप्रसवहेयाः सूक्ष्माः ॥ १० ॥ ध्यानहेयास्तद्वृत्तयः ॥ ११ ॥ क्लेशमूलः कर्माशयो दृष्टादृष्टजन्मवेदनीयः॥ १२॥ सति मूले तद्विपाको जात्या-

शुभोगाः ॥ १३ ॥ ते ह्लादपरितापफलाः पुण्यापुण्यहेतुत्वात् ॥ १४ ॥ परिणामतापसंस्कारदुःखैर्गुणवृत्तिविरोधाच्च दुःखमेव सर्वं विवेकिनः ॥ १५ ॥ हेयं दुःखमनागतम् ॥ १६ ॥ द्रष्टृदृश्ययोः संयोगो हेयहेतुः ॥ १७ ॥ प्रकाशक्रियास्थितिशीलं भूतेन्द्रियात्मकं भोगापवर्गार्थं दृश्यम् ॥ १८ ॥ विशेषाविशेषलिङ्गमात्रालिङ्गानि गुणपर्वाणि ॥ १९ ॥ द्रष्टा दृशिमात्रः शुद्धोऽपि प्रत्ययानुपश्यः ॥ २० ॥ तदर्थ एव दृश्यस्यात्मा ॥ २१ ॥ कृतार्थं प्रति नष्टमप्यनष्टं तदन्यसाधारणत्वात् ॥ २२ ॥ स्वस्वामिशक्त्योः स्वरूपोपलब्धिहेतुः संयोगः ॥ २३ ॥ तस्य हेतुरविद्या ॥ २४ ॥ तदभावात्संयोगाभावो हानं तद्दृशेः कैवल्यम् ॥ २५ ॥ विवेकख्यातिरविप्लवा हानोपायः ॥ २६ ॥ तस्य सप्तधा प्रान्तभूमिः प्रज्ञा ॥ २७ ॥ योगाङ्गानुष्ठानादशुद्धिक्षये ज्ञानदीप्तिराविवेकख्यातेः ॥ २८ ॥ यमनियमासनप्राणायामप्रत्याहारधारणाध्यानसमाधयोऽष्टावङ्गानि ॥ २९ ॥ तत्राहिंसासत्यास्तेयब्रह्मचर्यापरिग्रहा यमाः ॥ ३० ॥ जातिदेशकालसमयानवच्छिन्नाः सार्वभौमा महाव्रतम् ॥ ३१ ॥ शौचसंतोषतपःस्वाध्यायेश्वरप्रणिधानानि नियमाः ॥ ३२ ॥ वितर्कबाधने

प्रतिपक्षभावनम् ॥ ३३ ॥ वितर्का हिंसादयः कृतकारितानुमोदिता लोभक्रोधमोहपूर्वका मृदुमध्याधिमात्रा दुःखाज्ञानानन्तफला इतिप्रतिपक्षभावनम् ॥३४॥ अहिंसाप्रतिष्ठायां तत्संनिधौ वैरत्यागः ॥ ३५ ॥ सत्यप्रतिष्ठायां क्रियाफलाश्रयत्वम् ॥ ३६ ॥ अस्तेयप्रतिष्ठायां सर्वरत्नोपस्थानम् ॥ ३७ ॥ ब्रह्मचर्यप्रतिष्ठायां वीर्यलाभः ॥ ३८ ॥ अपरिग्रहस्थैर्ये जन्मकथंता संबोधः ॥ ३९॥ शौचात्स्वाङ्गजुगुप्सा परैरसंसर्गः ॥ ४० ॥ सत्त्वशुद्धौ सौमनस्यैकाग्र्येन्द्रियजयात्मदर्शनयोग्यत्वानि च ॥ ४१ ॥ संतोषादनुत्तमः सुखलाभः ॥ ४२ ॥ कायेन्द्रियसिद्धिरशुद्धिक्षयात्तपसः ॥ ४३ ॥ स्वाध्यायादिष्टदेवतासंप्रयोगः ॥ ४४॥ समाधिसिद्धिरीश्वरप्रणिधानात् ॥ ४५ ॥ स्थिरसुखमासनम् ॥ ४६ ॥ प्रयत्नशैथिल्यानन्तसमापत्तिभ्याम् ॥ ४७ ॥ ततो द्वन्द्वानभिघातः ॥ ४८ ॥ तस्मिन्सति श्वासप्रश्वासयोर्गतिविच्छेदः प्राणायामः ॥ ४९॥ बाह्याभ्यन्तरस्तम्भवृत्तिर्देशकालसंख्याभिः परिदृष्टो दीर्घसूक्ष्मः ॥ ५० ॥ बाह्याभ्यन्तरविषयाक्षेपी चतुर्थः ॥ ५१॥ ततः क्षीयते प्रकाशावरणम् ॥ ५२ ॥ धारणासु च योग्यता मनसः ॥ ५३ ॥ स्वविषयासंप्रयोगे

चित्तस्य स्वरूपानुकार इवेन्द्रियाणां प्रत्याहारः ॥ ५४ ॥ ततः परमावश्यतेन्द्रियाणाम् ॥ ५५ ॥

इति द्वितीयः पादः समाप्तः ॥ २ ॥

---

देशबन्धश्चित्तस्य धारणा ॥ १ ॥ तत्र प्रत्ययैकतानता ध्यानम् ॥ २ ॥ तदेवार्थमात्रनिर्भासं स्वरूपशून्यमिव समाधिः ॥ ३ ॥ त्रयमेकत्र संयमः ॥ ४ ॥ तज्जयात्प्रज्ञालोकः ॥ ५ ॥ तस्य भूमिषु विनियोगः ॥ ६ ॥ त्रयमन्तरङ्गं पूर्वेभ्यः ॥ ७ ॥ तदपि बहिरङ्गं निर्बीजस्य ॥ ८ ॥ व्युत्थाननिरोधसंस्कारयोरभिभवप्रादुर्भावौ निरोधक्षणचित्तान्वयो निरोधपरिणामः ॥ ९ ॥ तस्य प्रशान्तवाहिता संस्कारात् ॥ १० ॥ सर्वार्थतैकाग्रतयोः क्षयोदयौ चित्तस्य समाधिपरिणामः ॥ ११ ॥ ततः पुनः शान्तोदितौ तुल्यप्रत्ययौ चित्तस्यैकाग्रतापरिणामः ॥ १२ ॥ एतेन भूतेन्द्रियेषु धर्मलक्षणावस्थापरिणामा व्याख्याताः ॥ १३ ॥ शान्तोदिताव्यपदेश्यधर्मानुपाती धर्मी ॥ १४ ॥ क्रमान्यत्वं परिणामान्यत्वे हेतुः ॥ १५ ॥ परिणामत्रयसंयमादतीतानागतज्ञानम् ॥ १६ ॥ शब्दार्थप्रत्ययानामितरेतराध्यासात्सङ्करस्तत्प्रविभागसंयमात्सर्वभूतरुतज्ञानम् ॥ १७ ॥ संस्कारसाक्षात्करणात्पूर्वजातिज्ञानम् ॥ १८ ॥ प्रत्ययस्य परचि-

तज्ज्ञानम् ॥ १९॥ कायरूपसंयमात्तद्ग्राह्यशक्तिस्तम्भे चक्षुष्प्रकाशासंप्रयोगेऽन्तर्धानम् ॥ २० ॥ सोपक्रमं निरुपक्रमं च कर्म तत्संयमादपरान्तज्ञानमरिष्टेभ्यो वा ॥ २१ ॥ मैत्र्यादिषु बलानि ॥ २२ ॥ बलेषु हस्तिबलादीनि ॥२३ ॥ प्रवृत्त्यालोकन्यासात्सूक्ष्मव्यवहितविप्रकृष्टज्ञानम् ॥ २४ ॥ भुवनज्ञानं सूर्ये संयमात् ॥ २५ ॥ चन्द्रे ताराव्यूहज्ञानम् ॥ २६ ॥ ध्रुवे तद्गतिज्ञानम् ॥२७॥ नाभिचक्रे कायव्यूहज्ञानम् ॥ २८ ॥ कण्ठकूपे क्षुत्पिपासानिवृत्तिः ॥ २९ ॥ कूर्मनाड्यां स्थैर्यम् ॥ ३० ॥ मूर्धज्योतिषि सिद्धदर्शनम् ॥ ३१ ॥ प्रातिभाद्वा सर्वम् ॥ ३२ ॥ हृदये चित्तसंवित् ॥ ३३ ॥ सत्त्वपुरुषयोरत्यन्तासङ्कीर्णयोः प्रत्ययाविशेषो भोगः परार्थत्वात्स्वार्थसंयमात्पुरुषज्ञानम् ॥ ३४ ॥ ततः प्रातिभश्रावणवेदनादर्शास्वादवार्ता जायन्ते ॥ ३५ ॥ ते समाधावुपसर्गा व्युत्थाने सिद्धयः ॥ ३६ ॥ बन्धकारणशैथिल्यात्प्रचारसंवेदनाच्च चित्तस्य परशरीरावेशः ॥ ३७ ॥ उदानजयाज्जलपङ्ककण्टकादिष्वसङ्ग उत्क्रान्तिश्च ॥ ३८ ॥ समानजयाज्ज्वलनम् ॥ ३९ ॥ श्रोत्राकाशयोः संबन्धसंयमाद्दिव्यं श्रोत्रम् ॥४०॥ कायाकाशयोः संबन्धसंयमाल्लघुतूलसमापत्तेश्चाकाश-

गमनम् ॥ ४१ ॥ बहिरकल्पिता वृत्तिर्महाविदेहा ततः प्रकाशावरणक्षयः ॥४२॥ स्थूलस्वरूपसूक्ष्मान्वयार्थवत्त्वसंयमाद्भूतजयः ॥ ४३ ॥ ततोऽणिमादिप्रादुर्भावः कायसम्पत्तद्धर्मानभिघातश्च ॥ ४४ ॥ रूपलावण्यबलवज्रसंहननत्वानि कायसम्पत् ॥४५॥ ग्रहणस्वरूपास्मितान्वयार्थवत्त्वसंयमादिन्द्रियजयः ॥ ४६ ॥ ततो मनोजवित्वं विकरणभावः प्रधानजयश्च ॥ ४७ ॥ सत्त्वपुरुषान्यताख्यातिमात्रस्य सर्वभावाधिष्ठातृत्वं सर्वज्ञातृत्वं च ॥ ४८ ॥ तद्वैराग्यादपि दोषबीजक्षये कैवल्यम् ॥ ४९ ॥ स्थान्युपनिमन्त्रणे सङ्गस्मयाकरणं पुनरनिष्टप्रसङ्गात् ॥५०॥ क्षणतत्क्रमयोः संयमाद्विवेकजं ज्ञानम् ॥ ५१ ॥ जातिलक्षणदेशैरन्यतानवच्छेदात्तुल्ययोस्ततः प्रतिपत्तिः ॥ ५२ ॥ तारकं सर्वविषयं सर्वथाविषयमक्रमं चेति विवेकजज्ञानम् ॥ ५३ ॥ सत्त्वपुरुषयोः शुद्धिसाम्ये कैवल्यम् ॥ ५४ ॥

इति तृतीयः पादः समाप्तः ॥ ३ ॥

---

जन्मौषधिमन्त्रतपःसमाधिजाः सिद्धयः ॥ १ ॥ जात्यन्तरपरिणामः प्रकृत्यापूरात् ॥ २ ॥ निमित्तमप्रयोजकं प्रकृतीनां वरणभेदस्तु ततः क्षेत्रिकवत् ॥ ३ ॥ निर्माणचित्तान्यस्मितामात्रात् ॥ ४ ॥

प्रवृत्तिभेदे प्रयोजकं चित्तमेकमनेकेषाम् ॥ ५ ॥
तत्र ध्यानजमनाशयम् ॥ ६ ॥ कर्माशुक्लाकृष्णं योगि-
नस्त्रिविधमितरेषाम् ॥ ७ ॥ ततस्तद्विपाकानुगु-
णानामेवाभिव्यक्तिर्वासनानाम् ॥ ८ ॥ जातिदे-
शकालव्यवहितानामप्यानन्तर्यं स्मृतिसंस्कारयो-
रेकरूपत्वात् ॥ ९ ॥ तासामनादित्वं चाशिषो नित्य-
त्वात् ॥ १० ॥ हेतुफलाश्रयालम्बनैः संगृहीतत्वा-
देषामभावे तदभावः ॥ ११ ॥ अतीतानागतं स्वरू-
पतोऽस्त्यध्वभेदाद्धर्माणाम् ॥ १२ ॥ ते व्यक्त-
सूक्ष्मा गुणात्मानः ॥ १३ ॥ परिणामैकत्वाद्वस्तुत-
त्त्वम् ॥ १४ ॥ वस्तुसाम्ये चित्तभेदात्तयोर्विभक्तः
पन्थाः ॥ १५ ॥ न चैकचित्ततन्त्रं चेद्वस्तु तत्प्रमा-
णकं तदा किं स्यात् ॥ १६ ॥ तदुपरागापेक्षित्वा-
दस्य वस्तु ज्ञाताज्ञातम् ॥ १७ ॥ सदा ज्ञाताश्चि-
त्तवृत्तयस्तत्प्रभोः पुरुषस्यापरिणामात् ॥ १८ ॥ न
तत्स्वाभासं दृश्यत्वात् ॥ १९ ॥ एकसमये चोभ-
यानवधारणम् ॥ २० ॥ चित्तान्तरदृश्ये बुद्धिबुद्धे-
रतिप्रसङ्गः स्मृतिसङ्करश्च ॥ २१ ॥ चितेरप्रतिस-
ङ्क्रमायास्तदाकारापत्तौ स्वबुद्धिसंवेदनम् ॥ २२ ॥
द्रष्टृदृश्योपरक्तं चित्तं सर्वार्थम् ॥२३॥ तदसङ्ख्येय-
वासनाभिश्चित्तमपि परार्थं संहत्यकारित्वात् ॥२४॥

विशेषदर्शिन आत्मभावभावनाविनिवृत्तिः॥ २५॥
तदा विवेकनिम्नं कैवल्यप्राग्भारं चित्तम् ॥ २६ ॥
तच्छिद्रेषु प्रत्ययान्तराणि संस्कारेभ्यः ॥ २७॥
हानमेषां क्लेशवदुक्तम् ॥ २८ ॥ प्रसङ्ख्यानेऽप्यकुसीदस्य सर्वथा विवेकख्यातेर्धर्ममेघः समाधिः॥२९॥
ततः क्लेशकर्मनिवृत्तिः ॥ ३० ॥ तदा सर्वावरणमलापेतस्य ज्ञानस्यानन्त्याज्ज्ञेयमल्पम् ॥ ३१ ॥ ततः कृतार्थानां परिणामक्रमसमाप्तिर्गुणानाम् ॥ ३२ ॥
क्षणप्रतियोगी परिणामापरान्तनिर्ग्राह्यः क्रमः॥३३॥
पुरुषार्थशून्यानां गुणानां प्रतिप्रसवः कैवल्यं स्वरूपप्रतिष्ठा वा चितिशक्तिरिति ॥ ३४ ॥

इति चतुर्थः पादः समाप्तः ॥ ४ ॥

श्रीः

# योगसूत्रानुक्रमणिका।

अ


| | सूत्रांकः | पादः | पृष्ठम् |
|---|---|---|---|
| अतीतानागतं स्वरूपतोऽस्त्यध्वभेदाद्धर्माणाम् .... .... .... .... | १२ | ४ | १८७ |
| अथ योगानुशासनम् .... .... ... | १ | १ | १ |
| अनित्याशुचिदुःखानात्मसु नित्यशुचिसुखात्मख्यातिरविद्या .... .... .... | ५ | २ | ६३ |
| अनुभूतविषयासंप्रमोषः स्मृतिः .... | ११ | १ | १६ |
| अपरिग्रहस्थैर्ये जन्मकथंतासंबोधः .... | ३९ | २ | ११० |
| अभावप्रत्ययालम्बनावृत्तिर्निद्रा .... | १० | १ | १५ |
| अभ्यासवैराग्याभ्यां तन्निरोधः.... .... | १२ | १ | १७ |
| अविद्यास्मितारागद्वेषाभिनिवेशाः क्लेशाः | ३ | २ | ६१ |
| अविद्याक्षेत्रमुत्तरेषां प्रसुप्ततनुविच्छिन्नोदाराणाम् .... .... .... .... | ४ | २ | ६१ |
| अस्तेयप्रतिष्ठायां सर्वरत्नोपस्थानम् .... | ३७ | २ | १०९ |
| अहिंसाप्रतिष्ठायां तत्सन्निधौ वैरत्यागः | ३५ | २ | १०९ |


ई


| | | | |
|---|---|---|---|
| ईश्वरप्रणिधानाद्वा .... .... .... | २३ | १ | २५ |


उ


| | | | |
|---|---|---|---|
| उदानजयाज्जलपङ्ककण्टकादिष्वसङ्ग उत्क्रान्तिश्च .... .... .... | ३८ | ३ | १५७ |

| | सूत्रांकः | पादः | पृष्ठम् |
|---|---|---|---|
| **ऋ** | | | |
| ऋतंभरा तत्र प्रज्ञा .... .... .... | ४८ | १ | ५३ |
| **ए** | | | |
| एकसमये चोभयानवधारणम् .... .... | २० | ४ | १९६ |
| एतयैव सविचारा निर्विचारा च सूक्ष्मविषया व्याख्याता .... .... .... | ४४ | १ | ४९ |
| एतेन भूतेन्द्रियेषु धर्मलक्षणावस्थापरिणामा व्याख्याताः .... .... .... | १३ | ३ | १२५ |
| **क** | | | |
| कण्ठकूपे क्षुत्पिपासानिवृत्तिः .... .... | २९ | ३ | १५३ |
| कर्माशुक्लाकृष्णं योगिनस्त्रिविधमितरेषाम् | ७ | ४ | १८१ |
| क्रमान्यत्वं परिणामान्यत्वे हेतुः .... | १५ | ३ | १३९ |
| कायरूपसंयमात्तद्ग्राह्यशक्तिस्तम्भे चक्षुःप्रकाशासंप्रयोगेऽन्तर्धानम् .... .... | २१ | ३ | १४६ |
| कायाकाशयोः संबन्धसंयमाल्लघुतूलसमापत्तेश्चाकाशगमनम् .... .... | ४१ | ३ | १६० |
| कायेन्द्रियसिद्धिरशुद्धिक्षयात्तपसः .... | ४३ | २ | १११ |
| कूर्मनाड्यां स्थैर्यम् .... .... .... | ३० | ३ | १५३ |
| कृतार्थं प्रति नष्टमप्यनष्टं तदन्यसाधारणत्वात् .... .... .... .... | २२ | २ | ९२ |
| क्लेशकर्मविपाकाशयैरपरामृष्टः पुरुषविशेष ईश्वरः .... .... .... | २४ | १ | २६ |
| क्लेशमूलः कर्माशयो दृष्टादृष्टजन्मवेदनीयः .... .... .... .... | १२ | २ | ६९ |
| **ग** | | | |
| ग्रहणस्वरूपास्मितान्वयार्थवत्त्वसंयमादिन्द्रियजयः .... .... .... | ४६ | ३ | |

| | सूत्रांकः | पादः | पृष्ठम् |
|---|---|---|---|
| **च** | | | |
| चन्द्रे ताराव्यूहज्ञानम् .... .... .... | २६ | ३ | १५३ |
| चित्तान्तरदृश्ये बुद्धिबुद्धेरतिप्रसङ्गः स्मृतिसंकरश्च .... .... .... | २१ | ४ | १९६ |
| चितेरप्रतिसंक्रमायास्तदाकारापत्तौ स्वबुद्धिसंवेदनम् .... .... .... | २२ | ४ | १९७ |
| **ज** | | | |
| जन्मौषधिमन्त्रतपःसमाधिजाः सिद्धयः | १ | ४ | १७७ |
| जातिदेशकालव्यवहितानामप्यानन्तर्यं स्मृतिसंस्कारयोरेकरूपत्वात् .... | ९ | ४ | १८२ |
| जातिदेशकालसमयानवच्छिन्नाः सार्वभौमा महाव्रतम् .... .... .... | ३१ | २ | १०५ |
| जातिलक्षणदेशैरन्यतानवच्छेदात्तुल्ययोस्ततः प्रतिपत्तिः .... .... .... | ५२ | ३ | १७२ |
| जात्यन्तरपरिणामः प्रकृत्यापूरात् .... | २ | ४ | १७८ |
| **त** | | | |
| तच्छिद्रेषु प्रत्ययान्तराणि संस्कारेभ्यः.... | २७ | ४ | २०२ |
| तज्जपस्तदर्थभावनम् .... .... .... | २८ | १ | ३३ |
| तज्जयात्प्रज्ञालोकः .... .... .... | ५ | ३ | १२१ |
| तज्जः संस्कारोऽन्यसंस्कारप्रतिबन्धी .... | ५० | १ | ५४ |
| ततः कृतार्थानां परिणामक्रमसमाप्तिर्गुणानाम् .... .... .... .... | ३२ | ४ | २०५ |
| ततः क्लेशकर्मनिवृत्तिः .... .... | ३० | ४ | २०३ |
| ततः परमावश्यतेन्द्रियाणाम् .... .... | ५५ | २ | ११७ |
| ततः पुनः शान्तोदितौ तुल्यप्रत्ययौ चित्तस्यैकाग्रतापरिणामः .... ... | १२ | ३ | १२५ |

| | सूत्रांकः | पादः | पृष्ठम् |
|---|---|---|---|
| ततः प्रत्यक्चेतनाधिगमोऽप्यन्तरायाभावश्च .... .... .... .... | २९ | १ | ३३ |
| ततः प्रातिभश्रावणवेदनादर्शास्वादवार्ता जायन्ते .... .... .... | ३५ | ३ | १५६ |
| ततस्तद्विपाकानुगुणानामेवाभिव्यक्तिर्वासनानाम् .... .... .... .... | ८ | ४ | १८१ |
| ततः क्षीयते प्रकाशावरणम् .... .... | ५२ | २ | ११५ |
| ततोऽणिमादिप्रादुर्भावः कायसम्पत्तद्धर्मानभिघातश्च .... .... .... | ४४ | ३ | १६४ |
| ततो द्वन्द्वानभिघातः .... .... .... | ८ | २ | ११३ |
| ततो मनोजवित्वं विकरणभावः प्रधानजयश्च.... .... .... .... .... | ४७ | ३ | १६७ |
| तत्परं पुरुषख्यातेर्गुणवैतृष्ण्यम् .... | १६ | १ | २० |
| तत्प्रतिषेधार्थमेकतत्त्वाभ्यासः .... .... | ३२ | १ | ३६ |
| तत्र प्रत्ययैकतानता ध्यानम् .... .... | २ | ३ | १२० |
| तत्र स्थितौ यत्नोऽभ्यासः .... .... | १३ | १ | १८ |
| तत्र ध्यानजमनाशयम् .... .... .... | ६ | ४ | १८० |
| तत्र निरतिशयं सर्वज्ञबीजम् .... .... | २५ | १ | २९ |
| तत्र शब्दार्थज्ञानविकल्पैः संकीर्णा सवितर्का समापत्तिः.... .... .... | ४२ | १ | ४५ |
| तत्राहिंसासत्यास्तेयब्रह्मचर्यापरिग्रहाः यमाः .... .... .... .... | ३० | २ | १०३ |
| तदर्थ एव दृश्यस्यात्मा .... .... .... | २१ | २ | ९१ |
| तदपि बहिरङ्गं निर्बीजस्य .... .... | ८ | ३ | १२२ |
| तदभावात्संयोगाभावो हानं तद्दृशेः कैवल्यम् .... .... .... .... | २५ | २ | ९८ |

| | सूत्रांकः | पादः | पृष्ठम् |
|---|---|---|---|
| तदसंख्येयवासनाभिश्चित्तमपि परार्थं संहत्यकारित्वात् .... .... .... | २४ | ४ | २०० |
| तदा द्रष्टुः स्वरूपेऽवस्थानम् .... .... | ३ | १ | ६ |
| तदा विवेकनिम्नं कैवल्यप्राग्भारं चित्तम् | २६ | ४ | २०२ |
| तदा सर्वावरणमलापेतस्य ज्ञानस्यानं-त्याज्ज्ञेयमल्पम् .... .... .... | ३१ | ४ | २०४ |
| तदुपरागापेक्षित्वादस्य वस्तु ज्ञाता-ज्ञातम् .... .... .... .... | १७ | ४ | १९३ |
| तदेवार्थमात्रनिर्भासं स्वरूपशून्य-मिव समाधिः .... .... .... | ३ | ३ | १२० |
| तद्वैराग्यादपि दोषबीजक्षये कैवल्यम्.... | ४९ | ३ | १६८ |
| तपःस्वाध्यायेश्वरप्रणिधानानि क्रियायोगः .... .... .... .... | १ | २ | ५९ |
| तस्मिन्सति श्वासप्रश्वासयोर्गति-विच्छेदः प्राणायामः .... .... | ४९ | २ | ११३ |
| तस्य प्रशान्तवाहिता संस्कारात् .... | १० | ३ | १२४ |
| तस्य भूमिषु विनियोगः ... .... | ६ | ३ | १२१ |
| तस्य वाचकः प्रणवः .... .... .... | २७ | १ | ३२ |
| तस्य सप्तधा प्रान्तभूमिः प्रज्ञा .... | २७ | २ | ९१ |
| तस्य हेतुरविद्या.... .... .... .... | २४ | २ | ९६ |
| तस्यापि निरोधे सर्वनिरोधान्निर्बीजः समाधिः .... .... .... .... | ५१ | १ | ५५ |
| ता एव सबीजः समाधिः .... .... | ४६ | १ | ५२ |
| तारकं सर्वविषयं सर्वथाविषयमक्रमं चेति विवेकजज्ञानम् .... .... | ५३ | ३ | १७५ |
| तासामनादित्वं चाशिषो नित्यत्वात्.... | १० | ४ | १८३ |

| | सूत्रांकः | पादः | पृष्ठम् |
|---|---|---|---|
| तीव्रसंवेगानामासन्नः .... .... .... | २१ | १ | २५ |
| ते प्रतिप्रसवहेयाः सूक्ष्माः .... .... | १० | २ | ६८ |
| ते ह्लादपरितापफलाः पुण्यापुण्यहेतुत्वात् | १४ | २ | ७५ |
| ते व्यक्तसूक्ष्मा गुणात्मानः .... .... | १३ | ४ | १८८ |
| ते समाधावुपसर्गा व्युत्थाने सिद्धयः .... | ३६ | ३ | १५६ |
| त्रयमन्तरङ्गं पूर्वेभ्यः .... .... .... | ७ | ३ | १२२ |
| त्रयमेकत्र संयमः .... .... .... .... | ४ | ३ | १२० |
| **द** | | | |
| द्रष्टा दृशिमात्रः शुद्धोऽपि प्रत्ययानुपश्यः .... .... .... .... | २० | २ | ८९ |
| द्रष्टृदृश्ययोः संयोगो हेयहेतुः .... .... | १७ | २ | ८१ |
| द्रष्टृदृश्योपरक्तं चित्तं सर्वार्थम् .... .... | २३ | ४ | १९८ |
| दुःखदौर्मनस्याङ्गमेजयत्वश्वासप्रश्वासा विक्षेपसहभुवः .... .... | ३१ | १ | ३५ |
| दुःखानुशयी द्वेषः .... .... .... | ८ | २ | ६७ |
| दृग्दर्शनशक्त्योरेकात्मतेवास्मिता .... | ६ | २ | ६६ |
| दृष्टानुश्रविकविषयवितृष्णस्य वशीकारसंज्ञा वैराग्यम् .... .... | १५ | १ | १९ |
| देशबन्धश्चित्तस्य धारणा .... .... | १ | ३ | ११९ |
| **ध** | | | |
| धारणासु च योग्यता मनसः .... .... | ५३ | २ | ११६ |
| ध्यानहेयास्तद्वृत्तयः .... .... .... | ११ | २ | ६९ |
| ध्रुवे तद्गतिज्ञानम् . .... .... .... | २७ | ३ | १५३ |
| **न** | | | |
| नचैकचित्ततन्त्रं चेद्वस्तु तदप्रमाणकं तदा किं स्यात् .... .... .... | १६ | ४ | १९३ |

| | सूत्राङ्क | पाद | पृष्ठम् |
|---|---|---|---|
| नतत्स्वाभासं दृश्यत्वात् .... .... | १९ | ४ | १९९ |
| नाभिचक्रे कायव्यूहज्ञानम् .... .... | २८ | ३ | १९३ |
| निमित्तमप्रयोजकं प्रकृतीनां वरणभेदस्तु ततः क्षेत्रिकवत् .... .... | ३ | ४ | १७८ |
| निर्माणचित्तान्यस्मितामात्रात् .... | ४ | ४ | १७९ |
| निर्विचारवैशारद्येऽध्यात्मप्रसादः .... | ४७ | १ | ५२ |
| **प** | | | |
| परमाणुपरममहत्त्वान्तोऽस्य वशीकारः | ४० | १ | ४३ |
| परिणामतापसंस्कारदुःखैर्गुणवृत्तिविरोधाच्च दुःखमेव सर्वं विवेकिनः .... | १५ | २ | ७६ |
| परिणामत्रयसंयमादतीतानागतज्ञानम् .... .... .... .... | १६ | ३ | १३७ |
| परिणामैकत्वाद्वस्तुतत्त्वम् .... .... | १४ | ४ | १८९ |
| पुरुषार्थशून्यानां गुणानां प्रतिप्रसवः कैवल्यं स्वरूपप्रतिष्ठा वा चितिशक्तिरिति | ३४ | ४ | २०७ |
| प्रकाशक्रियास्थितिशीलं भूतेन्द्रियात्मकं भोगापवर्गार्थं दृश्यम् .... .... | १८ | २ | ८३ |
| प्रच्छर्दनविधारणाभ्यां वा प्राणस्य .... | ३४ | १ | ३९ |
| प्रत्ययस्य परचित्तज्ञानम् .... | १९ | ३ | १४६ |
| प्रमाणविपर्ययविकल्पनिद्रास्मृतयः .... | ६ | १ | १० |
| प्रयत्नशैथिल्यानन्तसमापत्तिभ्याम् .... | ४७ | २ | ११३ |
| प्रवृत्तिभेदे प्रयोजकं चित्तमेकमनेकेषाम् | ५ | ४ | १८ |
| प्रकृत्यालोकन्यासात्सूक्ष्मव्यवहितविप्रकृष्टज्ञानम् .... .... .... | २४ | ३ | १४८ |
| प्रसंख्यानेऽप्यकुसीदस्य सर्वथा विवेकख्यातिर्धर्ममेघः समाधिः .... .... | २९ | ४ | २०३ |

| | सूत्राङ्कः | पादः | पृष्ठम् |
|---|---|---|---|
| प्रातिभाद्वा सर्वम् .... .... .... | ३२ | ३ | १५४ |
| **ब** | | | |
| बन्धकारणशैथिल्यात्प्रचारसंवेदनाच्च चित्तस्य परशरीरावेशः .... .... | ३७ | ३ | १५७ |
| ब्रह्मचर्यप्रतिष्ठायां वीर्यलाभः .... .... | ३८ | २ | १०९ |
| बलेषु हस्तिबलादीनि .... .... .... | २३ | ३ | १४८ |
| बहिरकल्पितावृत्तिर्महाविदेहा ततः प्रकाशावरणक्षयः .... .... .... | ४२ | ३ | १६० |
| बाह्याभ्यन्तरस्तम्भवृत्तिर्देशकालसंख्याभिः परिदृष्टो दीर्घसूक्ष्मः .... | ५० | २ | ११४ |
| बाह्याभ्यन्तरविषयाक्षेपी चतुर्थः .... | ५१ | २ | ११५ |
| **भ** | | | |
| भवप्रत्ययो विदेहप्रकृतिलयानाम् .... | १९ | १ | २३ |
| भुवनज्ञानं सूर्ये संयमात् .... .... | २५ | ३ | १४९ |
| **म** | | | |
| मूर्धज्योतिषि सिद्धदर्शनम् .... .... | ३१ | ३ | १५४ |
| मृदुमध्याधिमात्रत्वात्ततोऽपि विशेषः.... | २२ | १ | २५ |
| मैत्रीकरुणामुदितोपेक्षाणां सुखदुःखपुण्यापुण्यविषयाणां भावनातश्चित्तप्रसादनम् .... .... .... | ३३ | १ | ३९ |
| मैत्र्यादिषु बलानि .... .... .... | २२ | ३ | १४८ |
| **य** | | | |
| यथाभिमतध्यानाद्वा .... .... .... | ३९ | १ | ४३ |
| यमनियमासनप्राणायामप्रत्याहारधारणाध्यानसमाधयोऽष्टावङ्गानि .... | २९ | २ | १०३ |
| योगश्चित्तवृत्तिनिरोधः .... .... .... | २ | १ | ४ |

| | सूत्रांकः | पादः | पृष्ठम् |
|---|---|---|---|
| योगाङ्गानुष्ठानादशुद्धिक्षये ज्ञानदीप्तिराविवेकख्यातेः .... .... .... | २८ | २ | १०० |
| **र** | | | |
| रूपलावण्यबलवज्रसंहननत्वानि कायसम्पत् .... .... .... .... | ४५ | ३ | १६६ |
| **व** | | | |
| वस्तुसाम्ये चित्तभेदात्तयोर्विभक्तः पन्थाः | १५ | ४ | १९१ |
| वितर्कबाधने प्रतिपक्षभावनम् .... .... | ३३ | २ | १०७ |
| वितर्कविचारानन्दास्मितारूपानुगमात्संप्रज्ञातः .... .... .... .... | १७ | १ | २१ |
| वितर्का हिंसादयः कृतकारितानुमोदिता लोभक्रोधमोहपूर्वका मृदुमध्याधिमात्रा दुःखाज्ञानानन्तफला इति प्रतिपक्षभावनम् .... .... | ३४ | २ | १०७ |
| विपर्ययो मिथ्याज्ञानमतद्रूपप्रतिष्ठम् .... | ८ | १ | १२ |
| विरामप्रत्ययाभ्यासपूर्वः संस्कारशेषोऽन्यः | १८ | १ | २२ |
| विवेकख्यातिरविप्लवा हानोपायः .... | २६ | २ | ९८ |
| विशेषदर्शिन आत्मभावभावनाविनिवृत्तिः | २५ | ४ | ३०१ |
| विशेषाविशेषलिङ्गमात्रालिङ्गानि गुणपर्वाणि .... .... .... .... | १९ | २ | ८६ |
| विशोका वा ज्योतिष्मती ... .... | ३६ | १ | ४१ |
| विषयवती वा प्रवृत्तिरुत्पन्ना मनसः स्थितिनिबन्धिनी .... ... .... | ३५ | १ | ४० |
| वीतरागविषयं वा चित्तम् .... .... | ३७ | १ | ४२ |
| वृत्तयः पञ्चतय्यः क्लिष्टाक्लिष्टाः .... | ५ | १ | ९ |
| वृत्तिसारूप्यमितरत्र .... .... .... | ४ | १ | ७ |

| | सूत्रांकः | पादः | पृष्ठम् |
|---|---|---|---|
| व्याधिस्त्यानसंशयप्रमादालस्यावि-रतिभ्रान्तिदर्शनालब्धभूमि-कत्वानवस्थितत्वानि चित्त-विक्षेपास्तेऽन्तरायाः .... .... | ३० | १ | ३४ |
| व्युत्थाननिरोधसंस्कारयोरभिभव-प्रादुर्भावौ निरोधक्षणचित्ता-न्वयो निरोधपरिणामः .... .... | ९ | ३ | १२३ |
| **श** | | | |
| शब्दज्ञानानुपाती वस्तुशून्यो विकल्पः.... | ९ | १ | १३ |
| शब्दार्थप्रत्ययानामितरेतराध्यासा-त्संकरस्तत्प्रविभागसंयमात्स-र्वभूतरुतज्ञानम् .... .... .... | १७ | ३ | १३७ |
| शान्तोदिताव्यपदेश्यधर्मानुपातीधर्मी.... | १४ | ३ | १३२ |
| शौचसंतोपतपःस्वाध्यायेश्वर-प्रणिधानानि नियमाः .... .... | ३२ | २ | १०६ |
| शौचात्स्वाङ्गजुगुप्सा परैरसंसर्गः .... | ४० | २ | ११० |
| श्रद्धावीर्यस्मृतिसमाधिप्रज्ञा-पूर्वक इतरेषाम् .... .... .... | २० | १ | २४ |
| श्रुतानुमानप्रज्ञाभ्यामन्यविषया विशेषार्थत्वात् .... .... .... | ४९ | १ | ५३ |
| श्रोत्राकाशयोः सम्बन्धसंयमाद्दिव्यं श्रोत्रम् .... .... .... .... | ४० | ३ | १५८ |
| **स** | | | |
| स एष पूर्वेषामपि गुरुः कालेनानव-च्छेदात् .... .... .... .... | २६ | १ | ३१ |
| सति मूले तद्विपाको जात्यायुर्भोगाः | १३ | २ | ७० |

| | सूत्रांकः | पादः | पृष्ठम् |
|---|---|---|---|
| सतु दीर्घकालनैरन्तर्यसत्कारासेवितो दृढभूमिः .... .... .... .... | १४ | १ | १८ |
| सत्यप्रतिष्ठायां क्रियाफलाश्रयत्वम् .... | ३६ | २ | १०९ |
| सत्त्वपुरुषयोरत्यन्तासङ्कीर्णयोः प्रत्ययाविशेषो भोगः परार्थत्वात्स्वार्थसंयमात्पुरुषज्ञानम् .... .... .... | ३४ | ३ | १६४ |
| सत्त्वपुरुषयोः शुद्धिसाम्ये कैवल्यम् .... | ५४ | ३ | १७५ |
| सत्त्वपुरुषान्यताख्यातिमात्रस्य सर्वभावाधिष्ठातृत्वं सर्वज्ञातृत्वं च .... | ४८ | ३ | १६८ |
| सत्त्वशुद्धौ सौमनस्यैकाग्र्येन्द्रियजयात्मदर्शनयोग्यत्वानि च .... .... | ४१ | २ | ११० |
| सदा ज्ञाताश्चित्तवृत्तयस्तत्प्रभोः पुरुषस्यापरिणामात् .... .... .... | १८ | ४ | १९४ |
| समाधिभावनार्थः क्लेशतनूकरणार्थश्च | २ | २ | ६० |
| समाधिसिद्धिरीश्वरप्रणिधानात् .... | ४५ | २ | ११२ |
| समानजयाज्ज्वलनम् .... .... .... | ३९ | ३ | १५८ |
| संतोषादनुत्तमः सुखलाभः .... .... | ४२ | २ | १११ |
| संस्कारसाक्षात्करणात्पूर्वजातिज्ञानम्... | १८ | ३ | १४४ |
| सर्वार्थतैकाग्रतयोः क्षयोदयौ चित्तस्य समाधिपरिणामः .... .... .... | ११ | ३ | १२४ |
| सुखानुशयी रागः .... .... .... | ७ | २ | ६६ |
| सूक्ष्मविषयत्वं चालिङ्गपर्यवसानम् .... | ४५ | १ | ५१ |
| सोपक्रमं निरुपक्रमं च कर्म तत्संयमादपरान्तज्ञानमरिष्टेभ्यो वा.... .... | २१ | ३ | १४६ |
| स्थान्युपनिमन्त्रणे सङ्गस्मयाकरणं पुनरनिष्टप्रसङ्गात् .... .... .... | ५० | ३ | १६९ |

| | सूत्रांकः | पादः | पृष्ठम् |
|---|---|---|---|
| स्थिरसुखमासनम् .... .... .... | ४६ | २ | ११२ |
| स्थूलस्वरूपसूक्ष्मान्वयार्थवत्त्व-संयमाद्भूतजयः .... .... .... | ४३ | ३ | १६१ |
| स्मृतिपरिशुद्धौ स्वरूपशून्येवार्थ-मात्रनिर्भासा निर्वितर्का .... .... | ४३ | १ | ४७ |
| स्वप्ननिद्राज्ञानालम्बनं वा .... .... | ३८ | १ | ४२ |
| स्वरसवाही विदुषोऽपि तथारू-ढोऽभिनिवेशः .... .... .... | ९ | २ | ६७ |
| स्वविषयासंप्रयोगे चित्तस्य स्व-रूपानुकार इवेन्द्रियाणां प्रत्याहारः .... .... .... .... | ५४ | २ | ११६ |
| स्वस्वामिशक्त्योः स्वरूपोपलब्धि-हेतुः संयोगः .... .... .... | २३ | २ | ९३ |
| स्वाध्यायादिष्टदेवतासंप्रयोगः .... .... | ४४ | २ | १११ |
| **ह** | | | |
| हानमेषां क्लेशवदुक्तम् .... .... .... | २८ | ४ | २०२ |
| हृदये चित्तसंवित् .... .... .... | ३३ | ३ | १५४ |
| हेतुफलाश्रयालम्बनैः संगृहीत-त्वादेषामभावे तदभावः .... .... | ११ | ४ | १८६ |
| हेयं दुःखमनागतम् .... .... .... | १६ | २ | ८१ |
| **क्ष** | | | |
| क्षणतत्क्रमयोः संयमाद्विवेकजं ज्ञानम् | ५१ | ३ | १७१ |
| क्षणप्रतियोगी परिणामापरान्त-निर्ग्राह्यः क्रमः .... .... .... | ३३ | ४ | २०९ |
| क्षीणवृत्तेरभिजातस्येव मणेर्ग्रहीतृग्रहण-ग्राह्येषु तत्स्थतदञ्जनतासमापत्तिः .... | ४१ | १ | ४३ |

# BOMBAY SANSKRIT SERIES.

*Edited under the superintendence of Dr. P. Peterson and Dr. R. G. Bhândârkar.*

| | Rs. | a. | p. |
|---|---|---|---|
| No. I.—Pañchatantra, Books IV. and V. Edited, with Notes, by Dr. Bühler ... ... ... ... | 0 | 4 | 0 |
| No. II.—Nâgojibhaṭṭa's Paribhâshendus'ekhara. Edited and explained by Dr. Kielhorn. The Sanskrit Text and various Readings, Part I. ... ... ... | 0 | 8 | 0 |
| No. III.—Pañchatantra, Books II. and III. Edited, with Notes, by Dr. Buhler... ... ... ... | 0 | 4 | 0 |
| No. IV.—Pañchatantra, Book I. Edited, with Notes, by Dr. F. Kielhorn ... ... ... ... ... | 0 | 7 | 0 |
| No. V.—The Raghuvaṁs'a of Kâlidâsa, with the Commentary of Mallinâtha. Edited, with Notes, by S. P. Pandit, M. A. Part I., Cantos I.—VI. ... ... | 1 | 0 | 0 |
| No. VI.—Mâlavikâgnimitra: a Sanskrit Play by Kâlidâsa. Edited, with Notes, by Shankar P. Pandit, M. A. ... ... ... ... ... | 2 | 2 | 0 |
| No. VII.—Nâgojibhaṭṭa's Paribhâshendus'ekhara. Edited and explained by Dr. Kielhorn. Part II. (Translation and Notes), Paribhâshâs I.—XXXVII | 0 | 8 | 0 |
| No. VIII.—The Raghuvaṁs'a of Kâlidâsa, with the Commentary of Mallinâtha. Edited, with Notes, by S. P. Pandit, M. A. Part II., *Cantos* VII.—XIII ... ... ... ... ... ... ... | 0 | 12 | 0 |
| No. IX.—Nâgojibhaṭṭa's Paribhâshendus'ekhara. Edited and explained by Dr. Kielhorn. Part II. (Translation and Notes), Paribhâshâs XXXVIII.—LXIX. ... ... ... ... ... ... | 0 | 3 | 0 |
| No. X.—The Das'akumâracharita of Daṇḍin. Part I. Edited, with Critical and Explanatory Notes, by Dr. Bühler ... ... ... ... ... ... | 0 | 8 | 0 |
| No. XI.—The Nîtis'ataka and Vairâgyas'ataka of *Bhartṛihari, with extracts from two Sanskrit Commentaries.* Edited, with Notes, by Kâshinâth Trimbak Telang, M. A. (copies not available.) ... | | | |
| No. [illegible] | 0 | 8 | 0 |
| No. [illegible] XIX ... ... ... ... ... ... ... | 0 | 8 | 0 |

Rs

No. XIV —Vikramânkadeva-Charita Life of king Vikramâditya Tribhuvanamalla of Kalyâna, composed by his Vidyâpati Bilhana Edited, with an Introduction, by Dr G Buhler (copies not available)

No. XV —Mâlatî-Mâdhava a Drama by Bhavabhûti Edited, with Critical and Explanatory Notes, by Dr R G Bhândârkar, M A, (second Ed in the Press)... .. .. .. ... ...

No. XVI.—Vikramorvasî a Drama by Kâlidâsa Edited with Notes, by Shankar P. Pandit, M A. .

No. XVII —Hemachandra's Des'înâmamâlâ Edited, with Critical Notes, a Glossary and a Historical Introduction, by Professor R Pischel and Dr. G Buhler, Part I Text and Critical, Notes by Professor Pischel ... ... ... .. ..

No XVIII —Vyâkarana Mahâbhâshya of Patañjali Edited by Dr F Kielhorn. Vol. I. complete. Parts I, II & III .. ... ... ..

No. XIX Ditto ditto by ditto Vol I. Part II

No XX Ditto ditto by ditto Vol I Part. III

No XXI Ditto ditto by ditto Vol II. Part I

No XXII Ditto ditto by ditto Vol. II Part II.

No XXIII. Vâsishthadharmas'âstram Edited, with Notes, by Dr A A Fuhrer .. ... ..

No XXIV —Kâdambarî by Bâna and his son Vol I Sanskrit Text, complete Edited by Dr. P. Peterson ... .. .. .. ..

Do Vol II Introduction and Notes, by do. ..

No. XXV —Kirti Kaumudî Edited, with Notes, by Prof A V. Kâthavate (copies not available.) ..

No XXVI.—Vyâkarana Mahâbhâshya of Patañjali Edited by Dr F. Kielhorn Vol II. Part III. ...

No XXVII —Mudrârâk[illegible]
the Commentary o[illegible]
Notes, by K. T [illegible]
the author)

No XXVIII —Vyâkarana Mahâbhâshya of Patañjali Edited by Dr F Kielhorn Vol. III Part I ...

No. XXIX —Ditto do of do. by do. Vol III Part II.

No XXX —Vyâkarana Mahâbhâshya Patañjali Edited by Dr F Kielhorn Vol III Part III ... ..

No XXXI —Subhâshitâvali of Vallabhadeva. Edited by Dr. P Peterson and Pandit Durgâprasâd ...

No XXXII —Tarka Kaumudî of Laugâkshi Bhâskara, Edited by Professor M N Dvivedi

No XXXIII.—Hitopades'a of Nârâyana. E[illegible]

| | Rs. | a. | p. |
|---|---|---|---|
| XXXV.—Mahânârâyana Upanishad. Edited by Colonel G. A. Jacob ... ... ... ... | 0 | 7 | 0 |
| XXXVI.—University Selections of Hymns from the Rigveda. Edited by Dr. P. Peterson ... | 4 | 0 | 0 |
| XXXVII.—S'ârṅgadharapaddhati. Edited by Dr. P. Peterson. Vol. I. ... ... ... ... | 3 | 0 | 0 |
| XXXVIII.—Naishakarmyasiddhi. Edited by Col. G. A. Jacob ... ... ... ... ... ... | 2 | 0 | 0 |
| XXXIX.—A Concordance to the principal Upanishads and Bhagvadgîtâ, by the same author. | 8 | 0 | 0 |
| XL.—Eleven Atharvaṇa Upanishads, with dîpikâs, by the same author ... ... ... ... ... | 2 | 8 | 0 |
| XLI.—Handbook to the study of the Rigveda, by Dr. P. Peterson. Part I. ... ... ... ... | 3 | 0 | 0 |
| XLII.—The Das'akumâracharita of Danddin, Part II. (completing Dr. Buhler's Edition). Edited with Critical and Explanatory Notes by Dr. P. Peterson. ... ... ... ... ... ... | 0 | 8 | 0 |
| XLIII.—Handbook to the study of the Rigveda by Dr. P. Peterson, Part II. comprising the Seventh Mandala with the commentary of Sâyana | 5 | 0 | 0 |
| XLIV.—*Aphorisms of the sacred Law of the Hindus* by Apastamba Edited with critical notes and Index of the Sutras and the various readings of the Hiranyakeshi Dharmasutra, by Dr. G. Buhler ... ... ... ... ... ... | 2 | 12 | 0 |
| XLV.—Râjataranginî of Kalhana, Edited by Pandit Durgâprasâda, Vol I. Tarangas I to VII. ... ... | 3 | 0 | 0 |